शोधप्रकाशन-ग्रन्थमाला — १९

श्रीभगवत्पादशिवानुभवशिवाचार्यविरचितः

# शिवाद्वैतदर्पणः

साङ्ख्यालङ्कार-न्यायवाचस्पति-तर्कतीर्थ-इत्यादिबिरुदाङ्कित-

श्रीपूज्यपाद-नीलकण्ठ-शिवाचार्य-

प्रणीतटिप्पणीसमलङ्कृतः

सम्पादकः

वे० ब्र० श्री० सिद्धान्ति-

सिद्धबसवशास्त्रि

प्रकाशकः

**शैवभारती-शोधप्रतिष्ठानम्**

जंगमवाड़ीमठ, वाराणसी - २२१ ००१

*Research Publications Series—19*

# ŚIVĀDVAITADARPAṆA

**OF**

**ŚIVĀNUBHAVA ŚIVĀCĀRYA**

*Critical Notes by*

**NĪLAKAṆṬHA ŚIVĀCĀRYA**

*Edited by*

**SIDDHABASAVA ŚĀSTRI**

**SHAIVA BHARATI SHODHA PRATISHTHANAM**
D. 35/77, Jangamawadimath, Varanasi - 221 001

*Published by:*
**SHAIVA BHARATI SHODHA PRATISHTHANAM**
D.35/77, Jangamawadimath
Varanasi - 221 001



ISBN 81-86768-35-1 (Hb)
ISBN 81-86768-36-X (Pb)

First published 1999

Price: Rs. 150 (Hb) Rs. 100 (Pb)

*Laser Typeset at:*
**Shiva-Shakti Computer Process**
Jangamawadimath, Varanasi - 221 001

*Printed at:*
**Jauhari Printers**
Mahamoorganj, Varanasi - 221 001

शैवभारती शोध प्रतिष्ठान के संस्थापक



श्री काशी विश्वाराध्य ज्ञानसिंहासनाधीश्वर

## श्री १००८ जगद्गुरु डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी का

# शुभाशीर्वचन

भारतीय प्राचीन वाङ्मय में निगम (वेद) और आगम (तन्त्रशास्त्र) प्रमुख माने जाते हैं। निगम और आगम भगवान् शिव से प्रादुर्भूत हैं, अत: परस्पर विरुद्धार्थक नहीं है। श्री नीलकण्ठ शिवाचार्य जी ने अपने ग्रन्थ क्रियासार के प्रथम उपदेश में इस विषय का इस प्रकार समर्थन किया है—

> परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः ।
> अल्पबुद्धिभिरन्योन्यं विरोधः परिकल्प्यते ।।

वेदों की संख्या चार और सिद्धान्त शैवागमों की अट्ठाईस मानी जाती है। इन शैवागमों के उत्तर भाग में वीरशैव धर्म-दर्शन का प्रतिपादन हुआ है। यह बात सिद्धान्तशिखामणि के निम्न वचन से सिद्ध होती है—

> सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते ।
> निर्दिष्टमुत्तरे भागे वीरशैवमतं परम् ।। (५.१४)

आज आगम, उपागम, निबन्ध, पद्धति-ग्रन्थ आदि के रूप में इसका विपुल साहित्य उपलब्ध है। वह सुविपुल प्राचीन आगम साहित्य धीरे-धीरे दुर्लभ होता जा रहा है। इसके संरक्षण एवं प्रकाशन के उद्देश्य से काशी के सुप्रसिद्ध श्री जगद्गुरु विश्वाराध्य ज्ञानसिंहासन, जंगमवाड़ी महामठ में शैवभारती शोध प्रतिष्ठान की स्थापना सन् १९९३ में की गई। तब से अब तक इसमें १८ ग्रन्थ प्रकाशित हो चुके हैं।

सम्पूर्णानन्द संस्कृत विश्वविद्यालय में वेदान्त विभाग के अन्तर्गत शक्तिविशिष्टाद्वैत वेदान्त पीठ की स्थापना सन् १९८४ में हुई और उसके लिये पाठ्यक्रम निर्धारित किया गया। उनमें से अनेक ग्रन्थ धीरे-धीरे अनुपलब्ध होते जा रहे हैं। ऐसे ग्रन्थों के पुनः प्रकाशन की भी योजना बनाई गई और इनमें से कुछ प्रकाशित भी हो चुके हैं। इसी सातत्य में आज श्री भगवत्पाद शिवानुभव शिवाचार्य जी के पूर्व प्रकाशित ग्रन्थ शिवाद्वैतदर्पण का पुनः प्रकाशन हो रहा है।

इसके पूर्व संस्करण का सम्पादन श्री ब्र. सिद्धान्ती सिद्धबसव शास्त्री जी ने किया था। ये पूवल्ली बृहन्मठ की वैदिक पाठशाला में अध्यापक रहे हैं। कर्णाटक भाषा से संस्कृत भाषा में अनूदित इनकी भूमिका में ब्रह्मसूत्र के वृत्तिकारों, भाष्यकारों आदि के विषय में पर्याप्त प्रामाणिक रूप में लिखा गया है और शक्तिविशिष्टाद्वैत मत के प्रथम भाष्यकार श्री भगवत्पाद नीलकण्ठ शिवाचार्य का तथा उनकी परम्परा का उल्लेख करते हुए प्रस्तुत ग्रन्थकार तक की गुरुसन्तति को भी सप्रमाण प्रस्तुत किया गया है। वैशेषिकाचार्य शिवादित्य यतीश्वर की यहाँ विशेष रूप से चर्चा की गई है। शिवादित्य-चरण का शक्तिसन्दोह नामक ग्रन्थ प्रस्तुत ग्रन्थ में अनेक स्थलों पर उद्धृत है। इसी तरह से प्रस्तुत ग्रन्थकर्ता के दूसरे ग्रन्थ शिवानुभवसिद्धान्त का और ग्रन्थकर्ता के गुरु चिद्घनदेव देशिकेन्द्र के ग्रन्थ शिवाद्वैतसुधाकर का भी यहाँ उल्लेख हुआ है। इन ग्रन्थों के प्राप्त होने पर इस विषय में और भी प्रामाणिक विवरण मिल सकता है।

प्रस्तुत ग्रन्थ के द्वितीय संस्करण का प्रकाशन करते समय हम सर्वप्रथम इस ग्रन्थ के सम्पादक एवं स्थान-स्थान पर महत्त्वपूर्ण विस्तृत टिप्पणियों के संयोजक श्री ब्र. सिद्धान्ती सिद्धबसव शास्त्री जी को सादर स्मरण करते हैं। नवीन संस्करण को परिशुद्ध रूप में प्रस्तुत करने में सम्पूर्णानन्द संस्कृत विश्वविद्यालय के प्रकाशन विभाग में कार्यरत श्री ददन उपाध्याय तथा हमारे गुरुकुल के शोधछात्र श्री सिद्धाराम देव हिप्परगी ने पर्याप्त प्रयास किया है। डॉ. जी. सी. केण्डदमठ, केन्द्रीय ग्रन्थालय, काशी हिन्दू विश्वविद्यालय, वाराणसी ने इस ग्रन्थ के सुन्दर मुद्रण की पूरी जिम्मेदारी निभाई है। इसी तरह से शिव-शक्ति कम्प्यूटर प्रोसेस में कार्यरत श्री राजशेखर जी. हिरेमठ ने आकर्षक अक्षर-संयोजन किया है। हम इन सबके उज्ज्वल भविष्य की कामना करते हुए आशीर्वाद पूर्ण करते हैं।

**महाशिवरात्रि (१४-२-९९)** **इत्याशिषः**

।।श्रीशिवाभ्यां नमः।।

# श्रीशिवाद्वैतदर्पणस्य

## भूमिका[१]

आर्याः शिवाद्वैतविद्याभिमानिनो धनिनः पण्डिताश्च ! वितरतेह करुणया किञ्चिदवधानम् ।

विज्ञातमेव हि भवतां यत्किल पुरा परमकारुणिको भगवान् बादरायणो लोकाननुजिघृक्षुर्मोक्षाख्यस्य तुरीयस्य परमपुरुषार्थस्य प्राप्तावुपायभूतं ब्रह्मज्ञानमस्मान-धिगमयितुमौपनिषदतत्त्वार्थविचाररूपं पादचतुष्टयपरिकर्मितैश्चतुर्भिरध्यायैः परिमितम्— ''अथाऽतो ब्रह्मजिज्ञासा'' इत्युपक्रान्तं शारीरकमीमांसाभिधानं सूत्रवृन्दं निर्मम इति।

मूलभूतस्य यस्य सूत्रनिकुरम्बस्य तात्त्विकमर्थं व्याचिख्यासुभिर् अगस्त्य-चैतन्य-बोधायनादिभिर्महर्षिभिः प्रणीतासु वृत्तिषु कालवशादाशेदुषीषु प्रचारलोपरूपां दुरवस्थामज्ञानान्ध्यमासेदुषां जनानां चक्षुरुन्मीलयितुमेव तत्तत्कालेषु कृतावतारैर्भगवदंशभूतैः श्रीनीलकण्ठशङ्कररामानुजानन्दतीर्थाद्यैर्महात्मभिरनुसृत्यैव प्राञ्चि मतान्यार्षाणि व्यरचिषत तत्तन्नामाङ्कितानि बहूनि भाष्याणि भिन्नभिन्नमतानुसारीणि।

एतेषु श्रीशङ्कररामानुजानन्दतीर्थकृतानि त्रीणि भाष्याणि अद्वैत-विशिष्टाद्वैत-द्वैतपराणि सम्प्रतिपन्नाभिर्व्याख्याभिः सहैव सम्मुद्र्य प्रकटीकृतानि सम्मोदमावहन्ति सर्वतः सुधियाम्। अपरमिदमप्यतीव सम्मोदास्पदं यत् श्रीश्रीकण्ठशिवाचार्यकृतं शिवाद्वैतप्रतिपादकं भाष्यं चतुरधिकशतप्रबन्धनिर्माणालङ्कर्मीणधिषणैर्विश्रुतकीर्तिभिः श्रीमदप्पय्यदीक्षितावंत-सैश्चिन्नबोम्मभूपालप्रेरणया विरचितामद्भुतशैलीं ग्रन्थषट्त्रिंशत्साहस्रीपरिमिततयाऽतिविस्तृतां दीक्षितेन्द्रयशःपताकायमानां शिवार्कमणिदीपिकानामिकां व्याख्यां समासाद्य सम्मुद्र्य प्रकटीकृतं श्रीहालास्यनाथशास्त्रिभिः शैवशिखामणिभिः।

परन्त्वादिममप्यन्येषां भाष्याणामिदं श्रीभगवत्पादनीलकण्ठशिवाचार्यकृतं शक्ति-विशिष्टाद्वैतापरनामकशिवाद्वैतसिद्धान्तप्रतिष्ठापकं भाष्यमननुगतप्रचारं नाद्यावधि मुद्रणपथमवरोहतीति लाञ्छनास्पदमिदं शिवाद्वैतविवेकिनाम्। न केवलं भाष्यमेकमेवाननुगतप्रचारमपि तु तच्छिद्धान्तानुगतप्रकरणादिग्रन्था अप्यननुगतप्रचारा

---

१. कर्णाटकभाषातः संस्कृतभाषायामनुवादितेयं भूमिका ।

इति वक्तुं नास्ति सन्देहः। अतो विषयेऽस्मिन् विमनीभावमासेदुषां कृतधियां प्रेरणया तदीयप्रकरणादिग्रन्थान्वेषणे प्रवृत्तोऽहं चिरात्प्राचीनलुप्यमानलोकोत्तरसत्प्रबन्ध-प्रकटनधृतव्यवसायतया श्रीमद्भगवत्पादनीलकण्ठशिवाचार्यप्रतिष्ठापितशक्तिविशिष्ट-शिवाद्वैतप्रतिपादकं श्रीशिवानुभवशिवाचार्यविरचितमद्भुतशैलीसमासादितं शिवाद्वैतदर्पणनामकं प्रकरणग्रन्थं तत्तत्स्थलविशदीकृतटिप्पणीसनाथीकृतं नागरलिप्यां सम्मुद्र्य प्रकटयितुं प्रावृतम्।

विपुलपरिश्रमसमासादितस्यास्य प्रबन्धस्य श्रद्धाजडशास्त्रानभिज्ञलेखककुल-प्रमादकलुषिततया परिशीलनार्हपण्डितकुलगुरुशिष्यपरम्परापरामर्शहीनतया कालवशापतिताऽ-संबद्धसम्पातसमासादितरूपान्तरतया च शोचनीयावस्थामुपगतस्य परिशोधने महदिदं कर्म दुःसाध्यं मादृशानामिति बाढमवबुद्ध्यमानोऽप्यहं विलुप्यमानस्य प्रबन्धस्यास्य पुनरुज्जीवनकुतूहलवशादनाकलितभाविपरिश्रमः श्रीपरशिवप्रेरितोऽहं श्रीशिवभक्तशिखामणेर् उगरगोलग्रामवास्तव्यस्य तृप्तर्षीत्युपाह्वयस्य श्रीमाननीयगोविन्दगौडमहोदयस्य द्रव्यसहायेन प्राविशमस्मिन् महति साहसे।

अस्तु तावदयमात्मवृत्तान्तः। साम्प्रतमस्य मूलग्रन्थस्य प्रणेता श्रीशिवानुभवशिवाचार्यः कस्मिन् समयेकं देशमलञ्चकारेति विचारः प्रस्तूयते। ग्रन्थस्यास्य प्रणेता श्रीशिवानुभवशिवाचार्यो दाक्षिणात्यो बेलगांवमण्डलान्तर्गतपूवल्लीक्षेत्रवास्तव्यः श्रीसिद्धचैतन्यशिवाचार्याणां पट्टशिष्यस्य विश्रुतकीर्तेर्वैशेषिकाचार्यस्य श्रीशिवादित्यशिवाचार्यस्य परम्परागतः श्रीभगवत्पाद-नीलकण्ठशिवाचार्याणां प्रशिष्यः पूवल्लीपञ्चवर्णबृहन्मठ-चरपट्टसमाश्रिताचार्यपट्टाभिषिक्तश्चासीदिति ग्रन्थस्यास्य मङ्गलाचरणावसरे ग्रन्थकारेणैव स्वनिबद्धस्वकीयगुरुपरम्परापर्यालोचनया ज्ञायते। तथाहि—

श्रीमतो दक्षिणामूर्तेर्गुरोः परम्परागतम्।
पूवल्लीसिद्धचैतन्यं वन्दे चैतन्यरूपिणम्॥

तत्कराम्भोजसम्भूतं शिवाचार्यशिरोमणिम्।
वन्दे वैशेषिकाचार्यं शिवादित्ययतीश्वरम्॥

तस्य हस्ताब्जसञ्जातं षड्दर्शनसुधाकरम्।
विश्वेश्वरशिवाचार्यं तं नमामि गुरुं परम्॥

तस्य श्रीकरकञ्जात्तु सञ्जातं शिवयोगिनम्।
नीलकण्ठशिवाचार्यं प्रणमामि जगद्गुरुम्॥

यः शम्भोरपरावतारविभवः शैवागमस्थापकः
यो वै वेदचतुष्टयप्रथमसद्व्याख्यावचःख्यापकः ।
यो वैयासिकसूत्रजालजलधौ भाष्यामृतोत्पादकः
स श्रीसद्गुरुनीलकण्ठयतिराड्जीयाज्जगज्जालकः ।।

निगमशिखरसिन्धौ स्वीयपाण्डित्यशैलो-
न्मथनजनितभाष्याख्यां सुधां संवितीर्य ।
भवविषभयभीतान् प्राणिनोऽपूपुषद् यः
स जयति गुणसान्द्रो नीलकण्ठो यतीन्द्रः ।।

दुर्वादिदर्वीकरनीलकण्ठस्तपःक्रियातर्पितनीलकण्ठ ।
शास्त्रार्थवादे कृतसिंहकण्ठो जीयात् स साक्षाद्भुवि नीलकण्ठः ।।

कृपासमुद्रः खलु नीलकण्ठो भवाम्बुधौ मग्नजनोद्दिधीर्षुः ।
स्वनामधेयाङ्कितभाष्यपोतं निर्मातुमेवावततार भूमौ ।।

तत्स्थापितशिवाद्वैतभाष्यसिंहासनेश्वरम् ।
श्रीचिद्घनगुरुं वन्दे साक्षाच्चिद्घनरूपिणम् ।।

श्रितजनहृदयाब्जभास्करोऽसौ
कलुषविषद्रुमभेदने कुठारः ।
करकलितनिजात्मतत्त्वबोधः
स जयति चिद्घनदेवदेशिकेन्द्रः ।।

तत्कराम्भोजजातेन शिवानुभवयोगिना ।
शिवाद्वैतदर्पणाख्यः प्रबन्धोऽयं विरच्यते ।। इति।

समासाद्यते चायं विषयः पूवल्लीपट्टावलिचरित्रेऽपि । विस्तरभयादत्र तत्रस्थाः केचित् श्लोका एवोदाह्रियन्ते। तत्र श्रीसिद्धचैतन्यशिवाचार्याणां वर्णनानन्तरं श्रीशिवादित्यशिवाचार्यस्य वर्णनमिदम्—

श्रीमच्चैतन्यसिद्धात्मसमधिगतशिवाद्वैतविद्याविलासः
काणादीरक्षपादीरपि गहनगिरो योगविद्यामवैदीत् ।
सिद्धान्ते जैमिनीये पटुतरमतिमान् पाणिनीयेऽपि विद्वान्
जीयात् सोऽयं सदा श्रीपरमगुरुशिवादित्ययोगीन्द्रचन्द्रः ।। इति।

श्रीशिवादित्यशिवाचार्यं समुपवर्ण्य ततस्तदन्तरभाविशिवाचार्याणां दर्पणकारोक्तप्रकारेणैव विस्तरेण वर्णनं कृतमिति तत्सर्वं विसृज्य प्रकृतोपयोगि ग्रन्थकारस्य श्रीशिवानुभवशिवाचार्यस्य वर्णनमुदाहरामः। तत्र श्रीचिद्घनगुरूणां वर्णनानन्तरं श्रीग्रन्थकारस्य वर्णनमिदम् —

श्रीचिद्घनार्यगुरुहस्तसरोजधामा श्रीमानभूद्गुरुशिवानुभवार्यनामा ।
षड्दर्शनाम्बुनिधिवर्धनपूर्णसोमः सद्भक्तमानसपयोजचयाभिरामः ।।इति।

एतत्सर्वसमालोचनया सिद्ध्यत्येव पूर्वप्रतिपादितो विषयः। एवं ग्रन्थकारस्यास्य स्थितिकालविचारे प्रस्तुते श्रीशिवादित्यशिवाचार्यस्यानन्तरमेवास्य स्थितिकाल इति वक्तुं शक्यते। अतः प्रथमं श्रीशिवादित्यशिवाचार्यस्य स्थितिकाल एव साध्यते।

तत्र तावद् वर्धमानोपाध्यायपितृगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणिग्रन्थे प्रत्यक्षखण्डे निर्विकल्पकवादे[1] श्रीशिवादित्यशिवाचार्यमतं तन्नामोल्लेखपूर्वकमुपन्यस्य तत्खण्डनात् ततः प्राचीनोऽयमाचार्य इत्यत्र नास्ति विवादावकाशः। गङ्गेशोपाध्यायश्च इतो वर्षसप्तशत्याः पूर्वमासीदिति निश्चीयते[2]।

एवमग्रेऽप्यन्वेषणे क्रियमाणे श्रीहर्षकृतखण्डनग्रन्थे श्रीशिवादित्यशिवाचार्यकृतानाम्— "तत्त्वानुभूतिः प्रमा" इत्यादीनां लक्षणानां खण्डने प्रकृते शङ्करमिश्रकृतायां तद्व्याख्यायां न्यायाचार्यत्वेनास्य बहुधोल्लेखात्[3] श्रीहर्षतोऽपि प्राचीनोऽयमित्यनुमातुं शक्यम्। अयं च श्रीहर्षस्तत्त्वचिन्तामणावनुमानखण्डे "व्याघातो यदि शङ्कास्ति" इति कारिकामुद्भाव्य "इति खण्डनकारमतमप्यपास्तम्" इति लेखोपलम्भाद् गङ्गेशोपाध्यायात् पूर्वं जात इति सिद्ध्यति। काव्यप्रकाशकारो महामाहेश्वरो मम्मटभट्टश्चास्य गुरुरिति वृद्धकिवदन्त्या, तस्य च ८८९ शाकवर्षे (११५० संवत्) जातस्य यशस्करदेवनृपतेः समकालिकतया[4] श्रीहर्षस्यापि ८८९ शाकवर्षे ततः किञ्चित् परं पूर्वं वा स्थितिः सिद्ध्यत्येव।

न्यायाचार्यस्तत्रभवानुदयनाचार्यः श्रीहर्षपितुः श्रीहीरस्य समानकालिकस्तेन चास्य विवादोऽपि समपद्यतेति केचित्[5]। उदयनाचार्यस्य समयस्तु—"तर्काम्बराङ्कप्रमितेष्वतीतेषु

---

१. कलिकाता-एशियाटिकसोसाइटीमुद्रिते तत्त्वचिन्तामणिपुस्तके ८३० पृष्ठं द्रष्टव्यम्।

२. बनारससंस्कृतसिरीजमुद्रितवैशेषिकदर्शनभूमिकायां द्रष्टव्यम्।

३. काश्यां मेडिकलहालयन्त्रालये मुद्रिते खण्डनपुस्तके १४४ पृष्ठं द्रष्टव्यम्।

४. बनारससंस्कृतसिरीजमुद्रितवैशेषिकदर्शनभूमिकायां २७ पृष्ठं द्रष्टव्यम्।

५. बनारससंस्कृतसिरीजमुद्रितवैशेषिकदर्शनभूमिकायां २६ पृष्ठं द्रष्टव्यम्।

शकान्ततः'' इति तत्कृतलक्षणावलीस्थश्लोकप्रमाणेन श्रीहर्षसमकालिक एवोदयनाचार्यः। श्रीहर्षेण सहास्य विवादोऽभूदिति खण्डनग्रन्थे प्रथमपरिच्छेदे "शङ्का चेदनुमास्त्येव'' इति न्यायकुसुमाञ्जलितृतीयपरिच्छेदोक्तस्योदयनाचार्यस्य मते श्रीहर्षेण— "तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा। त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि सति'' इत्यादिना खण्डिते।। "तत्रालीकं विचारासहमनिर्वचनीयं वा'' इत्यादिना ग्रन्थेनोदयनाचार्योऽपि स्वकृते आत्मतत्त्वविवेके (बौद्धाधिकारे) श्रीहर्षमतं खण्डयामासेति परस्परमतखण्डनेन समकालिकावेव श्रीमदुदयनाचार्यश्रीहर्षाविति परे[१]।

अस्तु नामानयोः समकालिकत्वं स्वल्पो वा पूर्वापरीभावः, परं श्रीहर्षेण श्रीशिवादित्यशिवाचार्योक्तलक्षणानामुट्टङ्कनात् तदुभयपूर्वकालिकत्वमनुमातुं नास्ति प्रतिबन्धः। तथा च पूर्वोक्तमम्मटभट्टसमयपर्यालोचनया नवमशाकशतकान्ते दशमशाकशतकादौ तदुभयसन्धौ वा श्रीहर्षस्योदयनाचार्यस्य च स्थितिकाले सिद्धे ततः प्राचीन एव कालः श्रीशिवादित्यशिवाचार्यस्यापि स्थित्याधार इति प्रतीयते।

अनेनैव श्रीशिवादित्यशिवाचार्येण वैशेषिकदर्शने सप्तपदार्थीलक्षणमाला, प्रशस्तपादभाष्यस्योपरि व्योमवतीनामिकाव्याख्या, शिवाद्वैतसिद्धान्ते शक्तिसन्दोहनामको ग्रन्थश्च विरचित इति श्रीपूवल्लीपट्टावलिचरित्रेणावगम्यते। तथाहि—श्रीशिवादित्यशिवाचार्यस्य वर्णनावसरे—

रचिता सप्तपदार्थी लक्षणमाला कणादविद्यायाम् ।
[२]भाष्यप्रथितव्याख्या व्योमवतीनामिका तेन ।।

श्रीशिवाद्वैतसिद्धान्ते शक्तिसन्दोहनामकम् ।
श्रुत्यागमप्रमाणाभ्यां ग्रन्थमन्यमरीरचत् ।। इति।

इदानीमुपलभ्यमानेषु ग्रन्थेषु सप्तपदार्थीनाम वैशेषिकप्रकरणं व्याख्याभिः सह मुद्रितमुपलभ्यते। लक्षणमालेति ग्रन्थोऽननुगतप्रचारः। व्योमवतीनामिका व्याख्यानुगतप्रचाराऽपि मुद्रणपथमनारूढा। शक्तिसन्दोहोऽप्यनुगतप्रचार एव। केचित्तु व्योमवतीकर्ता व्योमशिवाचार्यः सप्तपदार्थीकारात् शिवादित्यशिवाचार्याद्भिन्न इति वदन्ति, तदज्ञानविलसितम्; पूर्वाश्रमे शिवादित्यशिवाचार्य इति नामालङ्कृतोऽयम् आचार्यपट्टाभिषेकानन्तरं श्रीगुरुसिद्ध-चैतन्यशिवाचार्यप्रदत्तव्योमशिवाचार्य इति नाम्ना प्रसिद्धोऽभूदिति प्रतीयते। अतो ग्रन्थचतुष्टयस्य कर्त्रैकत्वे न कोऽपि विवादावकाशः। प्रकृतमनुसरामः —

---

१. खण्डनभूमिकायां ७ पृष्ठं द्रष्टव्यम् ।

२. "गौतमशास्त्रे ग्रथिता प्रथिता च न्यायचन्द्रिका तेन'' इति पाठान्तरम्।

एवं शिवाद्वैतदर्पणकारस्य श्रीशिवानुभवशिवाचार्यस्य स्थितिकालान्वेषणे पूवल्लीपट्टावलिचरित्रमेव सबलं प्रमाणम्। कर्णाटकलिप्यां मुद्रितपट्टावलावधोनिर्दिष्टसमय एव समुपलभ्यते। तथा हि—

| क्रम संख्या | नामानि | शकात् | शक-पर्यन्तम् | अवधिः | ऐक्य-स्थानम् |
|---|---|---|---|---|---|
| १ | श्रीगुरुसिद्धचैतन्यशिवाचार्यः | | | १५० | पूवल्ली |
| २ | श्रीगुरुशिवादित्यशिवाचार्यः | | | ९५ | काञ्ची |
| ३ | श्रीगुरुविश्वेश्वरशिवाचार्यः | | | ७८ | पूवल्ली |
| ४ | श्रीगुरुनीलकण्ठशिवाचार्यः | | ८० | ११७ | हृषीकेशः |
| ५ | श्रीगुरुचिद्घनशिवाचार्यः | ८० | ११८ | ३८ | श्रीशैलम् |
| ६ | श्रीगुरुशिवानुभवशिवाचार्यः | ११८ | १९३ | ७५ | पूवल्ली |
| ७ | श्रीगुरुस्वप्रभानन्दशिवाचार्यः | १९३ | २४० | ३७ | पूवल्ली |
| ८ | श्रीगुरुचिदम्बरशिवाचार्यः | २३० | २४२ | १२ | नखपुरम् |

इत्येतत्पट्टावलिपर्यालोचनया दर्पणकारः श्रीशिवानुभवशिवाचार्यो वैशेषिकाचार्यस्य श्रीशिवादित्यशिवाचार्यस्यानन्तरं शककालस्य द्वितीयशतमाने कर्णाटकदेशमलञ्चकारेति वक्तुं नास्ति सन्देहः।

अयं दर्पणकारः शिवानुभवसिद्धान्तनामकमपरं ग्रन्थं रचितवान् इत्येतद्ग्रन्थस्य तृतीयपरिच्छेदस्यान्तिमपङ्क्तौ—"स चास्मत्कृतशिवानुभवसिद्धान्ते विस्तरेण प्रतिपादित इत्यत्रैव विरम्यते" इति लेखदर्शनेनावगम्यते। समुपलभ्यते चेदं प्रमाणं पट्टावलिचरित्रेऽपि तथा हि तदीयवर्णनावसरे—

कृतस्तेन शिवाद्वैतदर्पणः श्रुतिसम्मतः ।
शिवानुभवसिद्धान्तश्चापरो मुक्तिदायकः ।। इति।

ग्रन्थस्यास्य प्राशस्त्यविषये किञ्चिदुक्त्वा निवेदनमिदमुपसंहरामि। सकलश्रुत्यागम-पुराणेतिहासतदर्थाभिज्ञेन श्रीवीरमाहेश्वराचार्यकुलसत्सम्प्रदायानुगतेन श्रीशिवानुभवशिवाचार्येण विरचितस्य ललितवर्णपदविन्यासादिकृतसन्दर्भरामणीयकस्य सहृदयास्वादनीयमहानन्द-प्रतिबिम्बनोपयोगिरीत्यादिवृत्तिवासनाभिव्यञ्जनक्षमविभावानुभावानुरूपार्थपरिलसितस्य "रसो

वै सः'', ''आनन्दं ब्रह्म'' इत्यादिश्रुतिवर्णितनिरतिशयानन्दरूपपराशक्तिविशिष्ट-परब्रह्मगुणवर्णनमात्रविश्रान्तस्य विविधविबुधजनपरिगृहीतप्रबलप्रमाणीभूतस्यास्य शिवाद्वैत-दर्पणस्य प्राशस्त्यविषये कि वदामः। एतद्ग्रन्थपरिशीलनचातुरीधुरीणाः पण्डिता एव जानन्ति। किं बहुना, लिङ्गधारणचन्द्रिकाकाराद्यैः श्रीनन्दिकेश्वरशिवाचार्यादिभिरयं ग्रन्थः प्रमाणत्वेनाङ्गीकृत[1] इत्यलमस्य प्राशस्त्यविषयपर्यालोचनेन।

एतद्ग्रन्थं प्रकाशयितुं प्रवृत्तोऽहं समपादयं त्रीणि शिवाद्वैतदर्पणपुस्तकानि। तत्रैकं तावदस्मदीयबृहन्मठस्य गृहकोशगतं शुद्धप्रायं सम्पूर्णं च। द्वितीयं सुगृहीतनामधेयस्य कै. वा. शिरःशृङ्गिसंस्थानाधिपस्य श्रीलिङ्गराजमहोदयस्य गृहकोशगतं नातिप्राचीनमशुद्धं च। तृतीयं बैलहोंगलनगरस्थश्रीशिवसङ्गार्यमठस्य गृहकोशगतं नातिप्राचीनं शुद्धप्रायमसम्पूर्णं चेति। एवं त्रीणि पुस्तकानि समासाद्य आरम्भकालादारभ्येयन्तं कालं समारब्धस्य द्रव्यव्ययसाधनीयस्य समुद्यमस्य विलम्बसाध्यतां मुद्रणशालाऽस्वातन्त्र्यं दवीयसो मुद्रणस्थानात् परिशोधनाय द्विस्त्रिर्यथासम्भवं मुद्रितप्रतिकृतिपात्रिकागतागतप्रयासं तन्मूलकापरिहार्यं समयातिपातमतिशिथिल-मातृकापुस्तकत्रुटितवर्णराजिशुद्धीकरक्लेशं सहमानः ''न सुखाल्लभ्यते सुखम्'' इति न्यायेन श्रेयसः क्लेशसाध्यतामवधारयन् भूयसाऽऽयासेन शोधितेऽप्यस्मिन् पुस्तकेऽशुद्धीरवलोक्य निरदिशं शुद्धिपत्रे। यदि क्वचिन्मदीयाल्पबुद्धिदोषात् दृष्टिदोषाद्वा दृग्गोचरीभवेयुरशुद्धयस्तर्हि गुणैकदृष्टयो विपश्चिद्वरा न भवेयुः कथमपि प्राचीनतरैतद्ग्रन्थस्य प्रथममुद्रणसमये मद्दोषोट्टङ्कनमात्रपरा इति दृढं निवेदयामि। प्रार्थये च सर्वान्तर्यामिणं भगवन्तं श्रीपरशिवं मदीयपरिश्रमसफलीकरणायेति शिवम्।।

इति सुधीजनविधेयो<br>
ज्योतिष्यालङ्कारः श्री. ब्र. सिद्धान्ती<br>
**सिद्धबसवशास्त्री**<br>
पूवल्लीबृहन्मठज्योतिष्यवैदिकपाठशालाध्यापकः।



---

१. श्रीकाशीजङ्गमवाटिकामठे प्रकाशितायां चन्द्रिकायां २६६ पृष्ठं द्रष्टव्यम्।

।। श्रीशिवाभ्यां नमः ।।

# श्रीशिवाद्वैतदर्पणस्य विषयानुक्रमणिका



## प्रथमः परिच्छेदः

## द्वितीयः परिच्छेदः

## तृतीयः परिच्छेदः

## चतुर्थः परिच्छेदः





श्रीगणेशाय नमः

श्रीभगवत्पादशिवानुभवशिवाचार्यविरचितः

# शिवाद्वैतदर्पणः

## प्रथमः परिच्छेदः

ॐ नमः श्रीगणेशाय लोकानां सिद्धिहेतवे ।
प्रत्यूहव्यूहपाथोधिसेतवे [१]मूषकेतवे ॥१॥

नमः शिवाय शान्ताय सच्चिदानन्दरूपिणे ।
षट्त्रिंशत्तत्त्वबीजाय साम्बाय परमात्मने ॥२॥

[२]पञ्चाननमुखोद्भूतान् पञ्चाक्षरमनूपमान् ।
पञ्चसूत्रकृतो वन्दे पञ्चाचार्यान् जगद्गुरून् ॥३॥

वेदव्यासं सूत्रकारं चैतन्यं वृत्तिकारकम् ।
भाष्यकृन्नीलकण्ठार्यमाश्रयेऽभीष्टसिद्धये ॥४॥

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥५॥

श्रीमतो दक्षिणामूर्तेर्गुरोः परम्परागतम् ।
पूवल्लीसिद्धचैतन्यं वन्दे चैतन्यरूपिणम् ॥६॥

तत्कराम्भोजसम्भूतं शिवाचार्यशिरोमणिम् ।
वन्दे वैशेषिकाचार्यं शिवादित्ययतीश्वरम् ॥७॥

तस्य हस्ताब्जसञ्जातं षड्दर्शनसुधाकरम् ।
विश्वेश्वरशिवाचार्यं तं नमामि गुरुं परम् ॥८॥

तस्य श्रीकरकञ्जातसञ्जातं शिवयोगिनम् ।
नीलकण्ठशिवाचार्यं प्रणमामि जगद्गुरुम् ॥९॥

---

१. 'वृषकेतवे' इति पाठान्तरम्।

२. श्लोकोऽयमधिको मुद्रितः।

यः शम्भोरपरावतारविभवः शैवागमस्थापकः
यो वै वेदचतुष्टयप्रथमसद्व्याख्यावचःख्यापकः ।
यो वैयासिकसूत्रजालजलधौ भाष्यामृतोत्पादकः
स श्रीसद्गुरुनीलकण्ठयतिराड्जीयाज्जगच्चालकः ।।१०।।

निगमशिखरसिन्धौ स्वीयपाण्डित्यशैलो-
न्मथनजनितभाष्याख्यां सुधां संवितीर्य ।
भवविषभयभीतान् प्राणिनोऽपूपुषद् यः
स जयति गुणसान्द्रो नीलकण्ठो यतीन्द्रः ।।११।।

दुर्वादिदर्वीकरनीलकण्ठस्तपःक्रियातर्पितनीलकण्ठः ।
शास्त्रार्थवादे कृतसिंहकण्ठो जीयात् स साक्षाद्भुवि नीलकण्ठः ।।१२।।

कृपासमुद्रः खलु नीलकण्ठो भवाम्बुधौ मग्नजनोद्दिधीर्षुः ।
स्वनामधेयाङ्कितभाष्यपोतं निर्मातुमेवावततार भूमौ ।।१३।।

तत्स्थापितशिवाद्वैतभाष्यसिंहासनेश्वरम् ।
श्रीचिद्घनगुरुं वन्दे साक्षाच्चिद्घनरूपिणम् ।।१४।।

श्रितजनहृदयाब्जभास्करोऽसौ
कलुषविषद्रुमभेदने कुठारः ।
करकलितनिजात्मतत्त्वबोधः
स जयति चिद्घनदेवदेशिकेन्द्रः ।।१५।।

तत्कराम्भोजजातेन शिवानुभवयोगिना ।
शिवाद्वैतदर्पणाख्यः प्रबन्धोऽयं विरच्यते ।।१६।।

अथ परमकारुणिको भगवान् बादरायणः संसारतापसन्तप्तान् जनानुद्धर्तुकामः—"[1]ज्ञात्वा शिवं शान्तिमत्यन्तमेति", "[2]ब्रह्मविदाप्नोति परम्", "सत्यं ज्ञानमनन्तं ब्रह्म", "[3]ज्ञात्वा तं मृत्युमत्येति", "नान्यः पन्था विमुक्तये", "[4]तमेव विदित्वाऽति-

---

१. श्वेताश्वतरोपनिषदि ४.१४

२. तैत्तिरीयोपनिषदि २.१.१

३. कैवल्योपनिषदि १.९

४. श्वेताश्वतरोपनिषदि ३.८

मृत्युमेति नान्यः पन्था विद्यतेऽयनाय'' इत्यादिश्रुत्यनुसारेण तेषां मोक्षैकसाधनीभूतब्रह्मज्ञान-सम्पादनार्थमुपनिषत्सारभूतशारीरकसूत्राणि प्रणिनीय तत्रादौ ब्रह्मजिज्ञासां सूत्रयामास ''[१]अथातो ब्रह्मजिज्ञासा'' इति। [२]अत्र अथशब्दार्थोऽष्टावरणविशिष्टपञ्चाचाररूपपतिधर्म-प्राप्त्यानन्तर्यवचनः। अतःशब्दो ह्यधिकारसम्पूर्णत्वं ब्रूते। तथा च—''[३]**वेदान्ते** परमं गुह्यं पुराकल्पे प्रचोदितम्। नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः।।'', ''यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।'', ''अधीतवेदाय जितेन्द्रियाय च प्रतिष्ठिताष्टावरणानुसारिणे। सदा सदाचारयुताय धीमते देयं शिवाद्वैतमिदं मुमुक्षवे।।'' इत्यादिश्रुत्यागमोक्तेः पतिधर्मप्राप्त्यनन्तरं यतोऽधिकारपूर्णत्वरूपपतिधर्मप्राप्तिः, अतो हेतोर्ब्रह्मणो जिज्ञासा कर्तव्येति शेषः। जिज्ञासापदस्य विचारे [४]लक्षणा। अतो ब्रह्मविचारशास्त्रमारम्भणीयमिति शास्त्रारम्भसूत्राभिप्रायः ।।१।।

---

१. **ब्रह्मसूत्रम्** १.१.१

२. ''अथाऽतो ब्रह्मजिज्ञासा'' इत्यत्राथशब्दस्यानन्तर्यार्थे विवक्षिते किमानन्तर्यमित्याकाङ्क्षायां धर्मानन्तर्यमुक्त्वा किंरूपस्य धर्मस्यानन्तर्यमित्याशङ्कायां पशुधर्मपतिधर्मभेदेन धर्मस्य द्वैविध्येनाद्यस्य पशुधर्मस्य पतिधर्मसमर्पकत्वेन परम्परया ब्रह्मज्ञानसाधनत्वम्, पतिधर्मस्य तु साक्षादेव तत्साधनत्वमित्यभिप्रायेणाह — अत्र अथशब्दार्थ इति। अष्टावरणानि श्रीगुरु-लिङ्ग-जङ्गम-पादोदक-प्रसाद-विभूति-रुद्राक्ष-मन्त्ररूपाणि भक्ताङ्गानि। पञ्चाचाराश्च लिङ्गाचार-भृत्याचार-सदाचार-शिवाचार-गणाचाररूपा भक्तधर्माः। वैशिष्ट्यं तु सामानाधिकरण्यसम्बन्धेन। तथा चाष्टावरणविशिष्टपञ्चाचाराणां पतिधर्मत्वेन तत्प्राप्त्यनन्तरमेव ब्रह्म जिज्ञासितव्यमित्यर्थः। तथा च **क्रियासारे** — ''धर्मानन्तर्यमेवातो वाच्यं धर्मो द्विधा मतः। पशुधर्मः प्राथमिकः पतिधर्मो द्वितीयकः। अनुतिष्ठन् पशोर्धर्मान् पतिधर्मान् स चार्हति। यथा पिपीलिका वृक्षमूलमाघ्राय तत्फलम् । आरुह्य लभते तद्वत् पतिधर्मैकतत्परः। यथा विहङ्गः पक्षाभ्यां फलितं वृक्षमागतः। पश्यन् फलमवाप्नोति तद्वच्छीघ्रं तदर्हति।।'' इति।

३. **श्वेताश्वतरे** ६.२२-२३

४. ''अथाऽतो ब्रह्मजिज्ञासा'' इत्यत्रानुवादपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येति पदमध्याहर्तव्यम्, जिज्ञासापदेन विचारो लक्षणीय इति ग्रन्थकारस्याशयः। नन्वत्र जिज्ञासापदस्य प्रकृतिप्रत्ययात्मकस्य वाक्यत्वेन लक्षणाऽयुक्ता, वाक्ये शक्त्यभावात्, शक्यसम्बन्धरूपलक्षणाया अप्यभावात्; इति चेन्न, प्रत्ययेन जहल्लक्षणया विचारो बोध्यते, प्रकृत्या च साध्यज्ञानमजहल्लक्षणयोच्यत इति लक्षणाद्वयमेवाङ्गीकरणीयमिति।

अथ किं ब्रह्म? किं तस्य लक्षणम्? इति चेदुच्यते—घनलिङ्गपर्यायवाचक: षट्स्थलात्मकपरशिव एव ब्रह्म। तल्लक्षणं तु सूक्ष्मचिदचिद्रूपशक्तिविशिष्टं ब्रह्मेति। जीवात्मन्यतिव्याप्तिवारणार्थं सूक्ष्मेति। सूक्ष्मत्वं च स्वभावनिर्मलत्वम्, तेन निर्मलचिदचिद्रूपशक्तिविशिष्टत्वेऽपि मुक्तात्मनि नातिव्याप्ति:, तस्य शक्ते: स्वभाव निर्मलत्वाभावात्। न च "जन्माद्यस्य यत:" इति सौत्रतल्लक्षणविरोध:, सूत्रेण जगज्जन्मादिकारणत्वस्य लक्षणीकरणादिति वाच्यम्, तस्य लक्षणीकरणे जगज्जन्मस्थितिलयतिरोधानानुग्रहेष्वेकैककारणत्वस्याप्यनन्यगामित्वेन परस्परनिरपेक्षं लक्षणपञ्चकविवक्षावश्यम्भावे गौरवाल्लाघवानुरोधेन निमित्तोपादानोभयसाधारणहेतुहेतुमद्भावसम्बन्धेनानुगतैकलक्षणविवक्षणे जिज्ञासाविषयीभूतज्ञेयब्रह्मणस्तल्लक्षणानुपपत्ते:, अत: प्रथमं ज्ञेयब्रह्मण: स्वरूपलक्षणविवक्षणावश्यकत्वात्, जगज्जन्मादिकारणत्वस्य तादृशशक्तिव्यतिरेकेणासम्भवाच्चेति प्रथमं सूक्ष्मचिदचिद्रूपशक्तिविशिष्टत्वलक्षणस्वरूपलक्षणस्यैव वक्तुमुचितत्वात् ।।२।।

ननु सच्चिदानन्दत्वमेव तत्स्वरूपलक्षणमस्तु? किमनेनानागतलक्षणेनेति चेन्न, शक्तिशक्तिमतोर्धर्मधर्मिभावविवक्षणेन सच्चिदानन्दानां ब्रह्मधर्माणामनुगतैकशक्तिस्वरूपत्वाभ्युपगमेनैव तन्निर्वाहात्, आनन्दमयाधिकरणभाष्येऽपि प्रचुरानन्दरूपानन्दमयस्य परब्रह्मधर्मस्य परब्रह्माश्रितपरमाकाशरूपपरमशक्तिस्वरूपत्वस्य [१]**भगवत्पादैरेव** स्वीकृतत्वात्।

---

अत्र केचित्तु प्रकृतिप्रत्ययसमुदाय एकैव लक्षणा। न च शक्यसम्बन्धाभाव:, समुदायिशक्यसम्बन्धादेव समुदायशक्यसम्बन्धस्याप्युपपत्तेरित्याहु:। तत्र युक्तम्, व्यासज्यवृत्तिलक्षणाबोधकपदानां तदर्थानां तत्सम्बन्धानां च नानात्वेन लक्षणाया एकत्वासम्भवात्। एवं च यत्र वाक्यार्थसम्बन्धेन वस्त्वन्तरं पदैर्लक्ष्यते, तत्रैव वाक्ये लक्षणा। यथा 'विषं भुङ्क्ष्व' इत्यादौ। तद्भिन्ना पदलक्षणेति शास्त्रे व्यवहार:। एवं स्थिते प्रकृतेऽपि समुदाये नैकलक्षणा, समुदायिनां भेदेन तत्सम्बन्धस्यापि भेदात्। न चैकप्रतीतिजनकत्वेन लक्षणानामेकत्वमिष्टापत्ति:, तथा सत्यन्यतरलक्षणयैव विचारोपस्थितौ लक्षणाद्वयेनापि तदुपस्थित्यङ्गीकाराद्वैयर्थ्यप्रसङ्ग:। अत: प्रकृतिप्रत्यययोर्द्वयोरपि लक्षकत्वेन लक्षणाद्वयमेवाङ्गीकर्तव्यम्, गौरवस्याकिञ्चित्करत्वात्। अत्र ज्ञानाय विचार: कर्तव्य इति ज्ञानं साध्यत्वेनोद्दिश्य साधनविचारो विधीयते, विचारस्य प्रकृत्यर्थज्ञानं प्रति साधनत्वेनान्वयात्।

१. श्रीनीलकण्ठशिवाचार्यपादै: स्वीकृतत्वादित्यर्थ:। तेषामयं भाष्यसन्दर्भ:— "तद्धेतुव्यपदेशाच्च" (ब्र.सू.१.१.१५), "को ह्येवान्यात् क: प्राण्याद् यदेष आकाश आनन्दो न स्यात्", "एष ह्येवानन्दयाति" इति सर्वजीवानामानन्दप्रदायकत्वेनानन्दहेतु-

न च भवदुक्तलक्षणप्रविष्टचेतनाचेतनात्मकविरुद्धशक्तिद्वयस्यैकत्रासम्भवेन परस्परनिरपेक्षसूक्ष्मचिद्रूपशक्तिविशिष्टत्वसूक्ष्माचिद्रूपशक्तिविशिष्टत्वयोः प्रत्येकलक्षणविवक्षणावश्यंभावे भवन्मतेऽपि गौरवस्य विद्यमानत्वात् सौत्रलक्षणमेव वक्तुमुचितमिति वाच्यम्, अस्मन्मते ब्रह्मधर्मरूपायाः शक्तेश्चिच्छक्तिरूपत्वं तत्प्रतिबिम्बरूपाया अचिच्छक्तिरूपत्वमित्यङ्गीकारेण चिच्छक्तितत्प्रतिबिम्बाचिच्छक्त्योर्ब्रह्मधर्मत्वे विरोधाभावेन शक्तिद्वयं समुच्चित्यैकस्यैव सूक्ष्मचिदचिद्रूपशक्तिविशिष्टत्वस्य लक्षणीकरणे तात्पर्यात् ।।३।।

---

व्यपदेशादानन्दमयः परशिव एव। स्वयं प्रचुरानन्दविशिष्टो हि परानानन्दयति। यथा प्रचुरविद्याविशिष्टः परान् विद्यावतः करोति। अतः परशिव एवानन्दमयः।

प्रचुरानन्दविशिष्टः परशिव आनन्दमय इत्युक्ते परशिवादन्य एव आनन्दमय इत्यवगम्यते, "ब्रह्मपुच्छं प्रतिष्ठा" इति ब्रह्माधारत्वेनास्यावगमात्। अतो जीव एवानन्दमय इत्याशङ्क्याह—"मान्त्रवर्णिकमेव च गीयते" (ब्र.सू.१.१.१६)। इतश्च चिदम्बरशक्तिविशिष्टः परशिव एव आनन्दमयः, "यो वेद निहितं गुहायां परमे व्योमन्" इत्यस्मिन् मन्त्रे प्रकृतम् "अन्योऽन्तरात्मा आनन्दमयः" इति ब्राह्मणे प्रचुरानन्दविशिष्टतया आनन्दमय इति गीयते, मन्त्रब्राह्मणयोरेकार्थत्वात्, इतरथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्, अन्तरत्वप्रतिज्ञानादन्यस्य चान्तरस्यानुपदेशाच्च। तथा "ब्रह्मविदाप्नोति परम्" इति मन्त्रेण यत्प्राप्यत्वेन परब्रह्म निर्दिष्टम्, तदेवैकम् "आनन्दमयमात्मानमुपसंक्रामति" इति ब्राह्मणे प्रचुरानन्दविशिष्टतया आनन्दमय इति गीयते, अन्यस्य प्राप्यस्याश्रवणात्। इतरथा श्रुतहानाश्रुतकल्पना प्रसज्येत। अतः परमाकाशरूपः प्रकृत्यात्मा आनन्दमय इति श्रूयते। न विश्वाधिकं निमित्तं परं ब्रह्म यत् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युच्यते। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुत आनन्दमयः परमाकाशः। परमाकाशरूपत्वमस्य "यदेष आकाशो आनन्दो न स्यात्" इत्यतोऽवगम्यते। "ब्रह्मपुच्छं प्रतिष्ठा" इति ब्रह्म प्रचुरानन्दरूपपरमाकाशस्याधारत्वेनावगम्यते। अत एव "स एको ब्रह्मण आनन्दः" इति ब्रह्माश्रितत्वेनावगम्यते। पुनरेष एव—"आनन्दो ब्रह्मेति व्यजानात्", "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना सकलभूतप्रकृतित्वेनाभिधीयते। तत्र "आनन्दो ब्रह्म" इत्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात्। "सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्याये चिदात्मनि परमे व्योम्नि वारुणी विद्या समाप्तेत्युच्यते। ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्तिर् आनन्दमय इत्युच्यते। तद्विशिष्टत्वात् तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं ब्रह्म। विज्ञानमयश्च तदुपासको जीवः। प्रतिष्ठाभूताद्धर्मिणः परशिवस्य ब्रह्मणो धर्मभूतस्यानन्दमयस्य शक्त्यात्मनो भेदादर्शनाद् आनन्दमय आत्मा ब्रह्मेत्यभिप्रायेण "आनन्दमयोऽभ्यासात्" इति सूत्रकारेण सूत्रितम् इति।

ननु भवदुक्तलक्षणस्वीकारे ब्रह्मणो जगज्जन्मादिनियामकत्वादिसिद्धि: कथं सम्भवतीति चेत्? श्रूयताम्—यथा सागरतरङ्गे सम्पन्नजन्मस्थितिलयं फेनबुद्बुदकदम्बकं तद्रूपमेव दृश्यते, तथा शक्तिविशिष्टे परब्रह्मणि सम्पन्नजगज्जन्मादिकं तद्रूपमेव, तदतिरिक्तं किञ्चन नोपलभ्यते। तथा **ह्यथर्वशिरसि** निरूपितमीश्वरेण—"[१]अहमेक: प्रथममासं वर्तामि च भविष्यामि च। नान्य: कश्चिन्मत्तो व्यतिरिक्त:" इति। ततश्च तेन 'ब्रह्माहम्, इत्यादिना विश्वरूपत्वमात्मन: प्रपञ्चितम्। तत्र विश्वरूपत्वे "सोऽन्तरादन्तरं प्राविशत्" इत्यनुप्रवेश एव हेतुरुक्त:। अतो ब्रह्मण: स्वापृथक्सिद्धजगज्जन्मादिनियामकत्वस्यार्थतो लाभात्। किञ्च, "[२]परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "[३]एक एव रुद्रो न द्वितीयाय तस्थे। इमान् लोकानीशत ईशनीभि: परमशक्तिभि:" इत्यादयश्च परब्रह्मण: षट्स्थलात्मकपरशिवस्य स्वाभाविकानन्तजगज्जनन-शासन-पालनशक्तिविशिष्टत्वं **श्रुतयो** वदन्ति।

किं बहुना, सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानन्दसत्ता देशकालादि-परिच्छेदशून्या स्वाभाविकी परमशक्ति: परब्रह्मण: परशिवस्यासाधारणधर्मरूपेत्युच्यते। तद्व्यतिरेकेण परशिवस्य सर्वज्ञत्व-सर्वशक्तिमत्त्व-सर्वकारणत्व-सर्वनियन्तृत्व-सर्वोपास्यत्व-सर्वानुग्राहकत्व-सर्वपुरुषार्थहेतुत्वादिकं न सम्भवति। अतोऽचिन्त्यशक्तिविशिष्टस्य तस्य जगज्जन्मादिनियामकत्वे न काप्यनुपपत्तिरिति विभावनीयम्।।४।।

ननु—"[४]अजामेकां लोहितशुक्लकृष्णां बह्वी: प्रजा: सृजमानां सरूपा:", "[५]मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम्" इति बहुप्रजाजनकत्वं मायापदवाच्य-परप्रकृतिरूपत्वं लोहितादिवर्णानुमितसत्त्वरजस्तमोरूपायास्तस्या: श्रवणात्, तज्जाड्यस्यैव घटादिष्वनुगमदर्शनात्, तदानुगुण्येन "[६]सदेव सौम्येदमग्र आसीत्" इत्यादिकारणपरवाक्येषु श्रूयमाणसच्छब्दवाच्यत्वं तस्या एव सुगमत्वाच्च शक्तिरेव जगदुपादानं प्रतीयते, कथं ब्रह्मोपादानमिति चेदुच्यते—ब्रह्म शक्तिश्चेत्युभयमुपादानम्, कारणपरवाक्येषु

---

१. अथर्वशिरसि प्रथमखण्डे।

२. श्वेताश्वतरोपनिषदि, ६.८

३. श्वेताश्वतरोपनिषदि, ३.२

४. श्वेताश्वतरोपनिषदि, ४.५

५. श्वेताश्वतरोपनिषदि, ४.१०

६. छान्दोग्योपनिषदि, ६.२.१

श्रूयमाणस्योपादानत्वस्योभयत्रोपपत्तेः, सन् घटो जडो घट इति सत्ताजाड्युभय-धर्मानुगत्युपपत्तेश्च। तत्र ब्रह्म स्वातन्त्र्येणोपादानम्, शक्तिस्तु पारतन्त्र्येणेत्येतावानेव विशेषः, [१]अनाश्रितान्तानां तत्परतन्त्रवृत्तित्वनियमात्। तथा चोक्तं **शिवादित्यचरणैः**—"[२]शक्त्यादि च पृथिव्यन्तं जगदेतच्चराचरम्। शिवशक्तिसमुत्पन्नं तन्तुर्लूतोद्भवो यथा।। शक्तिमानुच्यते देवः सच्चिदानन्दलक्षणः। धर्मरूपा परा शक्तिर्धर्मिरूपः परः शिवः।। तस्यानावृतरूपत्वात् परा शक्तिः परात्मनः। सर्वदा तत्स्वरूपेण भाति भानोरिव प्रभा।। तादात्म्यमनयोर्नित्यं धर्मधर्मिस्वभावतः। तत्र स्वतन्त्ररूपेण शिवः सच्चित्सुखात्मकः।। शक्तिस्तु पारतन्त्रेण विश्वोपादानमिष्यते।।" इति। अतः—"[३]अजामेकाम्", "[४]मायां तु प्रकृतिं विन्द्यात्" इति शक्तेरुपादानत्वं प्रतिपादयन्ती भगवती **श्रुतिः** पारतन्त्रेणैव तस्या उपादानत्वं वदति। अतः पारतन्त्रेणोपादानत्वसिद्ध्या स्वातन्त्रेण ब्रह्मणोऽप्युपादानत्वं सिद्धमेव। तादात्म्यापृथग्भावान्यतरसम्बन्धेन

---

१. आश्रितं न भवतीत्यनाश्रितं परं ब्रह्म, तद् अन्तोऽवसानं यस्य तद् अनाश्रितान्तं शक्त्यादिपृथिवीपर्यन्तं षट्त्रिंशत्तत्त्वजालं परतन्त्रवृत्ति इति ग्रन्थकारस्याशयः। अत्रेदमवगन्तव्यम्—शक्त्यादिकं परतन्त्रवृत्ति, अनाश्रितान्तत्वात्, यद् अनाश्रितान्तं तत् परतन्त्रवृत्ति, यथा घटः। ननु शक्त्यतिरिक्ततत्त्वानां तत्परतन्त्रवृत्तित्वमस्तु, न तु शक्तेः, तस्याः सर्वोपादानत्वेन सर्वतत्त्वाश्रयत्वादिति चेन्न, शक्तिः क्वचिदाश्रिता, धर्मत्वात्, यो यो धर्मः स स क्वचिदाश्रितः, घटाश्रितघटत्ववदित्यनुमानेन शक्तेः क्वचिदाश्रितत्वसिद्धेः। न च शक्तेर्धर्मत्वाभावात् स्वरूपासिद्धिरिति वाच्यम्, शक्तिर्धर्मरूपा, वृत्तिमत्त्वात्, घटत्ववदित्यनुमानेन शक्तेर्धर्मरूपत्वात् स्वरूपासिद्ध्यभावात्। न च शक्तिरेव नास्ति, कथं तत्राश्रितत्वादिकमनुमीयत इति वाच्यम्, चराचरप्रपञ्चस्य शक्तिस्वरूपत्वेन शक्तिर्नास्तीति वक्तुमनौचित्यात्। ननु भवन्मते चराचरप्रपञ्चस्य शक्तिस्वरूपत्वं कथमभ्युपेयते, तदुपादानरूपाया ब्रह्मनिष्ठशक्तेरेवाभावादिति चेन्न, ब्रह्म जगदुपादानविशिष्टम्, जगत्कर्तृत्वात्, यन्नैवं तन्नैवं यथा घटादि, इत्यनुमानेन जगदुपादानरूपा ब्रह्मनिष्ठा काचिच्छक्तिः साध्यते। न च तदुपादानत्वं प्रधान-परमाणु-कर्म-कालादीनां सम्भवति, तेषामचेतनत्वाज्जगदुपादानत्वासम्भवात्। अस्मन्मते ब्रह्मणि चेतनाचेतनो-भयात्मकशक्तिस्वीकारेण चेतनाचेतनोभयात्मकप्रपञ्च रूपकार्यस्याप्युपपत्तेः।

२. **शक्तिसन्दोहे**, प्र.१

३. श्वेताश्वतरोपनिषदि, ४.५

४. श्वेताश्वतरोपनिषदि, ४.१०

[१]कार्यावस्थाश्रयत्वं हि शक्तेरुपादानत्वं समर्थनीयम्। तत्सामर्थ्यमानमेव ब्रह्मपर्यन्तमायाति। नित्ययोगे खलु मायिनमित्यत्र मायाशब्दादिनिप्रत्यय:। तथा च शक्तेर्ब्रह्मापृथक्सिद्धयैव तदपृथक्सिद्धाया: कार्यावस्थाया अपि ब्रह्मापृथक्सिद्धिसम्भवात्। [२]"सदेव सौम्येदमग्र आसीत्" इत्याद्या: **श्रुतयस्तु**—"शक्ति: शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ। तौ ब्रह्मसामरस्येन समस्तजगदात्मकौ।।" इत्यादिना निमित्तोपादानोभयकारणं प्रपञ्चविलक्षणं शक्तिविशिष्टं षट्स्थलात्मकपरशिवं सच्छब्देन प्रतिपादयन्ति।।५।।

यद्यपि ब्रह्माश्रिता सूक्ष्मचिदचिद्रूपशक्ति: स्थूलचिदचिद्रूपशक्त्यात्मकसमस्तचेतनाचेतनरूपप्रपञ्चाकारेण परिणमति, न तु ब्रह्म केनाप्याकारेण परिणमति, तथाऽपि तथा तथा परिणममानानां ब्रह्माश्रितशक्तीनां ब्रह्मैवायुतसिद्धपर्यवसानभूमिरिति ब्रह्मपर्यन्तमुपादानत्वसिद्धेरप्रत्यूहत्वात्। यत्तु ब्रह्म [३]विवर्तमानतया, माया [४]परिणममानतयोपादानमिति [५]तन्मन्दम्, सद्रूपे विवर्ताधिष्ठानेऽसद्रूपप्रपञ्चोपादानत्वकल्पनानौचित्यात्, "नासतो विद्यते भावो नाभावो विद्यते सत:" इत्यादिना सदसतोरुपादानोपादेयभावस्य निषेधावगमात्। नहि सद्रूपे विवर्ताधिष्ठाने शुक्तावसद्रूपरजतोपादानत्वमिष्यते, अनुभवविरोधात्, असमानाधिकरणयोस्तयो: कार्यकारणभावासम्भवात्। इतरथा घटं प्रति तन्तोरपि कारणत्वं किं न स्यात्, [१]स्याच्च कालान्तरीय-देशान्तरीय-कपालादीनां घटादिकं

---

१. कार्यावस्थाश्रयत्वे सति कारणत्वमुपादानत्वम्। कार्येऽतिव्याप्तिवारणाय विशेष्यदलम्। निमित्तकारणेऽतिव्याप्तिवारणाय सत्यन्तम्। आश्रयत्वमत्र तादात्म्यापृथग्भावान्यतरसम्बन्धेन। एवमुपादानाश्रयत्वे सति कारणत्वं निमित्तकारणत्वम्। उपादानेऽतिव्याप्तिवारणाय सत्यन्तम्। उपादानाश्रयीभूते भूतलादौ तद्वारणाय विशेष्यदलम्। न च भूतलादीनामपि कारणत्वं सम्भवति, तेषां कार्योत्पत्त्यावश्यककार्यनियतपूर्ववृत्तित्वरूपकारणत्वासम्भवात्। अत्राश्रयत्वमीश्वरे तादात्म्यापृथग्भावान्यतरसम्बन्धेन, अन्यत्र यथायथं संयोगादिसम्बन्धेनेति मन्तव्यम्।

२. छान्दोग्योपनिषदि, ६.२.१

३. विवर्तत्वं स्वस्वरूपापरित्यागेन स्वरूपान्तरप्रदर्शकत्वम्।

४. परिणामत्वं स्वस्वरूपपरित्यागपूर्वकस्वरूपान्तरावस्थानत्वम्।

५. "तुष्यतु दुर्जन:" इति न्यायेन तन्मतप्रक्रियामनुसृत्य निषेधति—तन्मन्दमिति। शिवाद्वैते सर्वं वस्तु सदात्मकमिति कार्यकारणभावस्य न काप्यनुपपत्तिरिति भाव:।

प्रत्युपादानत्वम्, त्वन्मते कालान्तरीय-देशान्तरीय-रजतं प्रति शुक्तेरुपादानत्वस्वीकारात्।

तस्मात् सदात्मकोपादेयस्य जगतः सदात्मकमेवोपादानं भवितव्यमिति सदात्मकशक्तिविशिष्टपरशिव एवोपादानम्। "[२]असद्वा इदमग्र आसीत् ततो वै सदजायत" इत्याद्याः श्रुतयस्तु प्रलयावस्थायां स्थूलचिदचिदात्मकशक्तिरूपस्य प्रपञ्चस्य सच्चिदानन्दस्वरूपे षट्स्थलात्मके परशिवे ग्रीष्मकालधरित्रीविलीनतृणादिबीजवत् सूक्ष्मचिदचिदात्मकशक्तिरूपेणावस्थानं प्रतिपादयन्ति। तथा चोक्तं **शिवादित्यचरणैः**— "[३]असद्वेत्यादिवाक्येषु नासत्त्वं जगतः स्मृतम्। प्रलये तु चिदानन्दे शिवे परमकारणे।। चराचरप्रपञ्चस्य ग्रीष्मे क्ष्मालीनबीजवत्। सूक्ष्मरूपेण कार्यस्य संस्थितिः श्रूयते तदा।। कार्यात्मना निषेधो हि न तावत्कारणात्मना। सर्वात्मना त्वसत्त्वं चेदसत्कार्यं ततो भवेत्।। न ततः श्रूयते तत्र ततो वै इति वाक्यतः। सत्कार्यजननं प्रोक्तं तस्मात् [४]सर्वं सदात्मकम्"।। इति। अतो ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन सदात्मकस्य प्रपञ्चस्य सदात्मकं शक्तिविशिष्टं ब्रह्मैवोपादानमिति न कश्चिद्विरोधः।।६।।

यदपि वियदादिप्रपञ्चस्येश्वरतादात्म्यप्रतीतेस्तत्रेश्वर उपादानम्, तथाऽन्तःकरणादीनां

---

१. विवर्तवादे पुरोवर्तिस्थितशुक्तेर्देशान्तरकालान्तरस्थितरजतं प्रत्युपादानत्वस्वीकारे विरोधाभावेन देशकालावच्छेदेन समानाधिकरणयोः पदार्थयोः कार्यकारणभावं परित्यज्य विभिन्नदेशस्थितयोः पदार्थयोः कार्यकारणभावाभ्युपगमाद् अत्रापि विभिन्नदेशकालस्थितघटकपालादीनां कार्यकारणभावोऽभ्युपगन्तव्यः। तथा सति देशान्तरकालान्तरस्थितकपालादीनां घटादिकं प्रत्युपादानत्वं स्यादिति भावः।

२. तैत्तिरीयोपनिषदि, २.७

३. **शक्तिसन्दोहे**, प्र. १

४. शिवाद्वैतसिद्धान्ते परिणामवादस्याङ्गीकृतत्वादत्र समस्तकार्यजातस्य तद्विषयकज्ञानस्य च सत्यत्वमुररीक्रियते। ननु कार्यस्य सत्यत्वमस्तु, कथं तद्विषयकज्ञानस्य सत्यत्वमुच्यते? ज्ञानस्य भ्रमप्रमासाधारणत्वात्, इति चेन्न, ज्ञानस्य भ्रमप्रमासाधारणत्वेऽपि सत्कार्यान्तर्भूतत्वात्, तस्यापि सत्यत्वकथने बाधकाभावादिति। तथाहि—सादृश्यज्ञानस्य सत्यत्वाद् रज्जुसर्पज्ञानं सत्यम्, तज्ज्ञानस्य सादृश्यविषयकत्वात्, सादृश्यं विना तज्ज्ञानासम्भवाच्च। अङ्गुल्यादिनावष्टब्धनेत्रोद्दीर्णचन्द्रद्वयग्राहकदृक्सामग्रीद्वयस्य सत्यवाद् द्विचन्द्रज्ञानमपि सत्यम्। निमित्तस्य सत्यत्वेन नैमित्तिकस्यापि सत्यत्वाङ्गीकारेण स्वनयनगतपित्तदोषाच्छादितत्वेन शङ्खगतशुक्लिमा न गृह्यते, सुवर्णानुलिप्तशङ्खवत्। तस्मात् पीतः शङ्ख इति ज्ञानमपि सत्यमेव। तत्तद्देशसंयोगात् तत्तज्ज्ञानं जायते, अत्यन्तशीघ्रत्वेन नान्तरालज्ञानमस्ति,

जीवतादात्म्यप्रतीतेरत्र जीव एवोपादानमिति, तदपि तुच्छम्, "[१]एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारणी।।" इत्यादिश्रुत्या कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मैवोपादानमिति श्रवणात्। ननु "[२]विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानम्" इत्यादिना विश्वोत्तीर्ण एव परमेश्वरो निमित्तभूतः स्वव्यतिरिक्तप्रकृतौ स्वसङ्कल्पेन जायमानं हिरण्यगर्भं सृष्टमनुग्रहदृष्ट्या पश्यतीति श्रवणात् कथमस्य विश्वोपादानत्वं परप्रकृतिरूपत्वेन सम्भवति? नहि घटं निर्मिमाणः कुलालः स्वयमेव मृत्पिण्डीभूय घटं करोति, असम्भवात्। अतो निमित्तभूतस्य तस्योपादानत्वकल्पनासम्भवात्, शक्तेरुपादानत्वकल्पनेनैव कार्यनिष्पत्तिदर्शनात्, इति चेदुच्यते—"विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानम्" इत्यादिना यथा विश्वाधिकत्वमवगम्यते, तथा "[३]सर्वो वै रुद्रः", "[४]सर्वं खल्विदं ब्रह्म" इत्यादिना प्रकृतित्वं विश्वरूपत्वमपि श्रूयते। **शतरुद्रीये**—"नमो हिरण्यबाहवे" इत्यारभ्य "कुलुञ्चानां पतये नमः" इत्यन्तेन विश्वाधिपत्यम्, ततश्च—"नमः पर्णाय च पर्णशदाय च" इत्यन्तेन जगदाकारत्वं श्रूयते। अतो निमित्तभूतः परशिव एवोपादानम्।

किञ्च, "[५]स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति" इत्यादि**श्रुत्या** येनादेष्ट्रा निमित्तभूतेन विज्ञातेन चिदचिद्रूपं सर्वं जगद्विज्ञातं भवतीत्यादेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, "[१]यथैकेन मृत्पिण्डेन विज्ञातेन सर्वमिदं

---

तस्मादलातचक्रज्ञानमपि सत्यम्। पञ्चीकरणप्रक्रियानुसारेणैकस्मिन् भूतेऽन्येषामंशानामपि सत्त्वात्, व्योमांशभूयस्त्वेन न जलार्थसिद्धिरिति मरुमरीचिकाज्ञानमपि सत्यमेव। "स्वप्ने तु कालपुरुषं रक्तवस्त्रधरं तथा। गन्धर्वनगरं चैव यः पश्यति विशेषतः।। यमलोकं स षण्मासात् प्राप्नोति नात्र संशयः।।" इत्याद्यनुभवसिद्धपुराणवाक्यानां सत्यत्वात् स्वाप्निकसूक्ष्मप्रपञ्चविषयकज्ञानमपि सत्यम्। एवमैन्द्रजालिकज्ञानमपि सत्यमेव, तत्कारणीभूतमणिमन्त्रौषधादीनां सत्यवात्। एवमप्यन्यदप्यूहनीयम्। ननु "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्यादिना ब्रह्मातिरिक्तपदार्थानां मिथ्यात्वाद् भवदुक्तपदार्थानां मिथ्यात्वं किं न स्यादिति चेन्न, त्वदुक्त्यनुसारेण ब्रह्म मिथ्या, असत्यहेतुज्ञानविषयत्वात्, प्रपञ्चवत्—इत्यनुमानेन ब्रह्मणोऽपि मिथ्यात्वं स्यात्। अतः शिवाद्वैतमतोक्तमेव समीचीनमिति।

१. मुण्डकोपनिषदि, २.३
२. महानारायणे, २.१२
३. महानारायणे, २४
४. छान्दोग्योपनिषदि, २.१४
५. छान्दोग्ये, ६.१.२

मृण्मयं विज्ञातं स्यात्'' इति तदुपपादकमृत्पिण्डदृष्टान्तानुरोधाच्च ब्रह्मणो निमित्तमात्रत्वे तद्विज्ञानेन सकलप्रपञ्चविज्ञानं न सम्भवति। तथाहि कुलालज्ञानेन घटादिकार्यं न ज्ञायते, किन्तु तदुपादानमृत्पिण्डज्ञानेन अतो निमित्तभूतस्य परशिवस्य स्वापृथक्सिद्धशक्ति-परिणामभूतसर्वप्रपञ्चोपादानत्वस्य निश्चत्यूहत्वात्।।७।।

यदपि सच्चिदानन्दस्य परशिवस्योपादानत्वस्वीकारे कारणविकृतिरूपपरिणामप्रसङ्ग इत्युक्तम्, तदयुक्तम्, सूक्ष्मचिदचिद्रूपशक्तिविशिष्टस्य परशिवस्य कारणत्वं स्थूलचिदचिद्रूपशक्ति विशिष्टस्य तस्य कार्यत्वमिति वदतामस्माकं तत्प्रसङ्गभयाभावात्। तथा हि—''[२]यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी।।'' इति **श्रुत्या** यस्मिन् काले चन्द्रसूर्यादितेजःशून्यतया दिवारात्रिविभागरहितं नामरूपविशेषशून्यतया स्थूलसूक्ष्म-चेतनाचेतनसदसद्व्यक्तिव्यवस्थारहितं सर्वमिदं तमोभूतमवर्तत, तदा शिव एवाद्वितीयः केवलो नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टः स्वप्रकाशः परिशिष्टोऽभवत्। तदक्षरं तदेव तदानीं क्षररहितं नाशरहितं परं वस्तु तत् सवितुरादित्यस्य पूर्वं तेजःप्रदत्वेन वरेण्यम् अन्तर्वर्तितेजः, तदपि तदेव। तस्मात् तादृशात् स्वविलीनस्वेतरनिखिलप्रपञ्चा-दद्वितीयात् पुराणी नित्यशुद्धा तत्कालतमोऽपनोदिनी महास्फुरणरूपा विमर्शमयी प्रज्ञा नामरूपविभागार्हसूक्ष्मचिदचिद्रूपशक्तिः प्रसृता प्रावर्तत। तथा चोक्तं **शिवादित्यचरणैः**—''[३]शिवादुत्पद्यते शक्तिः इच्छाज्ञानक्रियात्मिका। अप्रमेयगुणोपेता जृम्भते सा शिवाज्ञया'' इति। अत्रोत्पद्यते इत्यनेन न तावच्छक्तेरुत्पादविनाशशालित्वरूपानित्यत्वं किन्तु घृतकाठिन्यन्यायेन स्वविभागानर्ह-परशिवतत्वाद्विभागं प्राप्य विमर्शात्मकप्रज्ञाशक्तिरूपेण परिणमतीति तात्पर्यम्।।८।।

एतादृशप्रज्ञाशक्तिविशिष्टं परशित्ततत्त्वं सर्वज्ञत्व-नित्यतृप्तत्व-अनादिबोधत्व-स्वतन्त्रत्व-अलुप्तशक्तिमत्त्व-अनन्तशक्तिमत्त्वादिधर्मविशिष्टतयाऽन्तर्यामी जगत्कारणं महेश्वर इत्युच्यते। ''[४]मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्'', ''[५]सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य।।''

---

१. छान्दोग्ये ६.१.४

२. श्वेताश्वतरे ४.१८

३. शक्तिसन्दोहे, प्र.१

४. श्वेताश्वतरे, ४.१०

**५. शक्तिसन्दोहे, प्र. १**

इत्यादि**श्रुतेः**। सोऽयं महेश्वरः सिसृक्षुः "[१]सोऽकामयत बहु स्यां प्रजायेयेति" इति बहुप्रपञ्चभावनयाऽऽत्मनो मायालक्षणामिच्छारूपां शक्तिमाश्रयति, तदिच्छाशक्तिविशिष्टः सन् कालरुद्र इत्युच्यते। अथ "[२]स तपोऽतप्यत" इति तपःस्वरूपिकया ज्ञानात्मिकया शक्त्या सकलजीवकर्मानुगुणतत्त च्छरीरादिसामग्रीमालोचयति, तदा ज्ञानशक्तिविशिष्टः सन् विष्णुरित्युच्यते। अथ स्वसङ्कल्पितसकलकरणविदग्धया क्रियाशक्त्या "[३]इदं सर्वमसृजत्" इतीच्छाशक्तिभित्तौ निखिलजगच्चित्रमुन्मीलयति, तदाऽयं क्रियाशक्तिविशिष्टः सन् चतुर्वक्त्रो ब्रह्मेत्युच्यते। अत एते ब्रह्मविष्णुमहेश्वराः कारणशक्तिविशिष्टत्वात् कारणात्मान इत्युच्यन्ते। तदुक्तं **शिवादित्यचरणैः**—"[४]त्रयस्ते कारणात्मानो जाताः साक्षात्सदाशिवात्। पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु।। ब्रह्मा सर्गे हरिस्त्राणे महेशो हरणे पुनः।" इति।

एवमिच्छाज्ञानक्रियाशक्तिरूपप्रज्ञाशक्तिविशिष्टः सदाशिवः—"[५]तत्सृष्ट्वा तदेवानुप्राविशत्" इति स्वशक्तिपरिणामीभूतकलादिभूम्यन्तत्रिंशत्तत्त्वात्मकस्थूल-चिदचिच्छक्तिविशिष्टसकलकार्यजातं सृष्ट्वा स्वयमात्मतया प्रविश्य—"[६]सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च" इति सर्वान्तर्यामित्वेन सर्वशरीरकतया स्वसृष्टप्रत्यक्षपरोक्षसाधारणनामयुक्ततद्रहिताधाराधेय-चेतनाचेतनात्मकसकलप्रपञ्चरूपेण बहुधा परिणतोऽभवत्। तथा चोक्तं **कारणागमे**—"निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च। शान्त्यतीतकलेत्येताः

---

१. तैत्तिरीये, २.६

२. तैत्तिरीये, २.६

३. तैत्तिरीयोपनिषदि, २.६

४. **शक्तिसन्दोहे**। तत्रैते श्लोकाः—"आदिशक्तिमयं बीजं बीजशक्तिमयं शिवः। सा शक्तिस्त्रिविधा प्रोक्ता इच्छाज्ञानक्रियात्मिका।। एतच्छक्तित्रयोपेतो विश्वकर्ता सदाशिवः। तस्येच्छाशक्तिमानीशः ज्ञानशक्तियुतो हरिः।। क्रियाशक्तियुतो ब्रह्मा क्रमादेते त्रिमूर्तयः। विश्वस्य कारणात्मानो जाताः साक्षात् सदाशिवात्।। पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु। ब्रह्मा सर्गे हरिस्त्राणे ईशः संहरणे तथा।।" इति। अत्र "आदिशक्तिमयं बीजम्" इत्यस्य आदिशक्तिविशिष्टं जगज्जन्मादिकारणं ब्रह्मेत्यर्थः।

५. तैत्तिरीयोपनिषदि, २.६

६. तैत्तिरीयोपनिषदि, २.६

स्थिता ब्रह्मादिमूर्तिषु।। तया शिवाज्ञया ह्येते वर्तन्ते सुमहोज्वलाः। ब्रह्माणो देवता दैत्या मुनयो मनवस्तथा।। स्वेदजाश्चाण्डजाः सर्वे प्राणिनश्च जरायुजाः। तरुगुल्मलतावृक्षाद्यनेकोद्भिज्जकोटयः।। गिरयः सरितश्चान्ये समुद्राश्च सरांसि च। सम्भवन्ति क्रमेणैव तस्माच्छिवमयं जगत्।।'' इति। अतः सर्वथा जिज्ञासाविषयीभूतज्ञेयब्रह्मणो लक्षणस्य जगदुभयकारणस्वरूपे शक्तिविशिष्टे षट्स्थलात्मके भगवति परशिवे समन्वयेन परशिवतत्त्वात्मकं घनलिङ्गमेव मुमुक्षुभिर्जिज्ञास्यमिति सर्वं समञ्जसम्।।

।। इति शिवतत्त्वविवेकः।।

*।। इति प्रथमः परिच्छेदः।।*



# द्वितीयः परिच्छेदः

अथ को जीवः ? किं तस्य लक्षणमिति चेदुच्यते—तत्राङ्गपर्यायवाचकोऽहंप्रतीतिविषयो जीवः। तल्लक्षणं तु स्थूलचिदचिद्रूपशक्तिविशिष्टो जीव इति, "[१]कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इत्यभियुक्तसूक्त्या कार्यरूपायाः स्थूलचिदचिद्रूपशक्तेर्जीवोपाधित्वोपगमात्। परमात्ममुक्तात्मनोरतिव्याप्तिवारणार्थं स्थूलेति शक्तेर्विशेषणम्। स्थूलत्वं च मलत्रयविशिष्टत्वम्, अत एवाशुद्धत्वमित्यपि व्यवहारः। न च स्थूलचिदचिद्रूपशक्तेरेकत्वं युक्तम्, येन तादृशशक्तिविशिष्टजीवस्याप्येकत्वशङ्का समुत्पद्येत। अतः कार्यरूपायास्तस्या अनेकत्वाभ्युपगमेन तद्विशिष्टजीवस्याप्यनेकत्वमभ्युपेयते, उपाधिभेदेन भेदस्वीकारात्। दृष्टं चैतदेकस्याः कारणरूपाया मृदः कार्यरूपस्य घटशरावादिकस्य तद्विशिष्टाकाशस्याप्यनेकत्वम्। नन्वेवं सति जीवस्य परिच्छिन्नत्वं स्यात्, इति चेदिष्टापत्तिः, तत्तत्स्थूलचिदचिद्रूपायाः शक्तेः परिच्छिन्नत्वात्, तद्विशिष्टजीवचैतन्यस्याप्यर्थतस्तल्लाभात्। "[२]बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते।। नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स युज्यते।।" इत्यादिश्रुतेश्च।।१।।

अथ जीवोपाधिभूता सेयं स्थूलचिदचिद्रूपशक्तिरावरणशक्तिरौन्मुख्यशक्तिरिति द्विधा भवति। तत्र सूक्ष्मचिच्छक्तिपरिणामरूपा ब्रह्मचैतन्यगोपनानुकूला शक्तिरावरणशक्तिः। गोपनत्वं च ब्रह्म नास्ति न प्रकाशत इति व्यवहारयोग्यत्वम्। सा च शक्तिः शिवतत्त्वमाश्रित्य कला-विद्या-राग-काल-नियतिभेदेन पञ्चधा भवति। तत्र सर्वकर्तृत्वशक्तिपरिणामरूपा किञ्चित्कर्तृत्वशक्तिः कलाशक्तिः, सर्वज्ञताशक्तिपरिणामरूपा किञ्चिज्ज्ञत्वशक्तिर्विद्याशक्तिः, पूर्णताशक्तिपरिणामरूपाऽपूर्णताशक्ती रागशक्तिः, नित्यत्वशक्तिपरिणामरूपाऽनित्यत्वशक्तिः कालशक्तिः, व्यापकताशक्तिपरिणामरूपाऽव्यापकताशक्तिर्नियतिशक्तिः। एवंविधकलादिशक्तिपञ्चकमस्य जीवस्य परशिवशासनादपरिच्छिन्नस्वस्वरूपावरण-

---

१. शिवाद्वैतसुधाकरे ।

२. श्वेताश्वतरोपनिषदि, ५.९-१०

भूतत्वादावरणशक्तिः। अत एव पञ्चकञ्चुकमिति व्यवह्रियते। एतत्पञ्चकञ्चुकं स्थूलसूक्ष्मावस्थाप्रपन्ननिखिलप्रपञ्चस्योपादानकारणत्वात् कारणशरीरम्, कार्यरूपशक्तेस्तादात्म्यभावापन्नकारणशक्तौ लीनत्वात् सुषुप्तिः, अत एव स्थूलसूक्ष्मावस्थाप्रपन्नसर्वप्रपञ्चस्य लयस्थानम्, आनन्दप्रचुरत्वाद् आनन्दशक्तिरत एवानन्दमयकोश इति च व्यवह्रियते। एतदुपाधिविशिष्टो जीवः प्राज्ञ इत्युच्यते, "[1]सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञः" इति **श्रुतेः**।।२।।

अथ सूक्ष्माचिच्छक्तिपरिणामरूपा तत्तज्जीवसाधारणसुखदुःखादिभोगानुकूला शक्तिरौन्मुख्यशक्तिः। सा च शुद्धचैतन्यरूपपरशिवप्रेरकत्वेन प्रकृतितत्त्वादिपृथिवीतत्त्वपर्यन्तं चतुर्विंशतितत्त्वात्मना परिणमते। तत्रेच्छाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्यात् प्रतिबिम्बगत्या सुखदुःखमोहप्रदसत्त्वरजस्तमसां साम्यावस्थालक्षणं बुद्ध्यादिभूम्यन्तत्रयोविंशतितत्त्वमूलकारणं प्रकृतितत्त्वं भवति। सत्त्वगुणप्रधानतया निश्चयहेतुर्बुद्धितत्त्वं भवति। रजोगुणप्रधानतया सङ्कल्पविकल्पसाधनं मनस्तत्त्वं भवति। तमोगुणप्रधानतया ममेदं कर्तव्यमित्यभिमानसाधनमहङ्कारतत्त्वं भवति। एतत्त्रितयं शरीरान्तःस्थित्वा सुखादिवेद्यावधानकरणरूपत्वादन्तःकरणमित्युच्यते। एवं ज्ञानशक्त्युद्रेकदशापन्नोन्मुख्यशक्तिविशिष्टचैतन्यात् सत्त्वगुणप्रधानतया शरीरबाह्यलग्नशब्दज्ञानकरणं श्रोत्रम्, स्पर्शज्ञानकरणं त्वक्, रूपज्ञानकरणं चक्षुः, रसज्ञानकरणं रसनम्, गन्धज्ञानकरणं घ्राणमित्युच्यते। एतद्बाह्यकरणपञ्चकं ज्ञानशक्तिप्रधानत्वाद् ज्ञानेन्द्रियमित्युच्यते। एवं क्रियाशक्त्युद्रेकदशापन्नोन्मुख्यशक्तिविशिष्टचैतन्याद् रजोगुणप्रधानतयोच्चारणक्रियाहेतुर्वाक्, दानादानादिक्रियासाधनं पाणिः, गमनागमनादिक्रियासाधनं पादः, भुक्तजीर्णमलपरित्यागसाधनं पायुः, रेतोमूत्रपरित्यागक्रियासाधनमुपस्थकं भवति। एतद्बाह्यकरणपञ्चकं क्रियाशक्तिप्रधानत्वात् कर्मेन्द्रियमित्युच्यते। एतत्करणत्रयोदशकमिच्छाज्ञानक्रियाशक्त्यात्मकमिति मन्तव्यम्।।३।।

अथ क्रियाशक्त्युद्रेकदशापन्नौन्मुख्यशक्तिविशिष्टचैतन्यात् तमोगुणप्रधानतया आकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी चोत्पद्यन्ते, "[2]आत्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति **श्रुतेः**। एतान्येव पञ्चतन्मात्राणि सूक्ष्मभूतानीत्युच्यन्ते। एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि च सम्भवन्ति।

---

१. माण्डूक्योपनिषदि, ५

२. तैत्तिरीयोपनिषदि, २.१

सूक्ष्मशरीराणि भूतसूक्ष्मपञ्चकं ज्ञानेद्रियपञ्चकं कर्मेंद्रियपञ्चकं वृत्तित्रयात्मकमेकमन्त:करणं पञ्चवृत्तिक एक: प्राणश्चेति सप्तदशावयवात्मकानि। एतान्येव लिङ्गशरीराणीत्युच्यन्ते। अत्र ज्ञानेन्द्रियसहितं ज्ञानशक्तिप्रधानं बुद्धितत्त्वं कर्तृरूपं विज्ञानमयकोशो भवति, ज्ञानेन्द्रियसहितमिच्छाशक्तिप्रधानं मनस्तत्त्वं करणरूपं मनोमयकोशो भवति, कर्मेन्द्रियसहितं क्रियाशक्तिप्रधानं प्राणतत्त्वं कार्यरूपप्राणमयकोशो भवति। एतत्कोशत्रयमिलितं सूक्ष्मशरीरमित्युच्यते। एतत्सूक्ष्मशरीरावच्छिन्नो जीवस्तैजस इति व्यपदिश्यते। तैजसस्य सूक्ष्मशरीरमिदं स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्, जाग्रद्वासनामयत्वाच्च स्वप्न:। अत एव स्थूलप्रपञ्चलयस्थानं ज्ञानशक्तिप्रधानत्वाज्ज्ञानशक्तिरत एव विज्ञानादिकोशत्रयात्मकमित्युच्यते, "[1]स्वप्नस्थानोऽन्त:प्रज्ञ: सप्ताङ्ग एकोनविंशतिमुख: प्रविविक्तभुक् तैजस:" इति श्रुते:।।४।।

स्थूलभूतानि त्रिवृत्कृतानि। त्रिवृत्करणं नाम तेजोबन्नानां त्रयाणां मध्ये एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधा विभागं कृत्वा स्वस्वद्वितीयस्थूलभागं परित्यज्यान्यदीयस्थूल-भागयोरेकैकस्य भागस्य संयोजनम्। तथा हि श्रूयते—"[2]सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवराणीति। तासां त्रिवृतं त्रिवृतं एकैकां करवाणि" इति। ननु त्रिवृत्करणे कृते तेजस: पृथिव्याद्यात्मकत्वे काठिन्यद्रवत्वादिविशिष्ट-तयोपलम्भप्रसङ्ग:? इति चेन्न, अर्धभूयस्त्वात् स्वस्वाश्रितगुणविशिष्टतयोपलम्भात्, एवं शाखान्तरे प्रसिद्धाकाशवायुसृष्टे: श्रुतत्वात् तत्परित्यागानुपपत्ते:। अतस्तच्छ्रुति-विरोधपरिहारायोपसंहार: क्रियते।

न च वाय्वाकाशयोर्व्यवहार एव नास्तीति वाच्यम्, महान् वायुर्महन्नभ इति सर्वानुभवसिद्धत्वात्। यत्तु पञ्चीकरणसमष्टि: पञ्चभूतसृष्टिरिति, तन्न मनोरमम्, व्यवहारमार्गप्राप्तपञ्चीकृतिर्मुधा, पञ्चीकरणस्य कुत्राप्यश्रवणात्, [3]श्रुतहानाश्रुतकल्पनाप्रसङ्गात्, त्रिवृत्करणश्रुतिविरोधाच्च। ननु श्रुत्यन्तरैकवाक्यतया पञ्चानां भूतानां सृष्टिं प्रक्रम्य तेषां सूक्ष्मतया व्यवहार्यमाणानां व्यवहारसिद्धये त्रिवृत्करणं ब्रुवन्ती श्रुति: पञ्चीकरणाभिप्रायेति चेन्न, तथा सति त्रिवृत्करणेनैव सामञ्जस्ये व्यवहारमात्रसिद्धये श्रुतिविरुद्धपञ्चीकरण-कल्पनानौचित्यात्। एवं त्रिवृत्कृतेषु भूतेषु प्रतिनियताश्रया अपि शब्दादयो गुणा यथायथमुत्पद्यन्ते।

---

१. माण्डूक्योपनिषदि, ४

२. छान्दोग्योपनिषदि, ६.३.२

३. श्रुतस्य त्रिवृत्करणस्य हान: परित्याग:, अश्रुतस्य पञ्चीकरणस्य कल्पनारूपदोष इत्यर्थ:।

एतदुक्तं भवति—आकाशादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वेन स्वस्वकार्यपेक्षया व्यापकत्वात् कार्यांशसंवलितत्वेऽपि न कार्यगतगुणाश्रयतयाऽभिव्यक्तिः, किन्तु स्वस्वगुणाश्रयतयैव, तथा कार्याणां स्वकारणापेक्षयाऽल्पत्वात्, तेषां कारणभागसम्मिश्रितानां कारणगुणाश्रयतयाऽपि भवत्यभिव्यक्तिरिति।।५।।

एवं त्रिवृत्कृतेभ्यो भूतेभ्यश्चतुर्दशलोकानां ब्रह्माण्डस्य तदन्तर्वर्तिचतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनामुत्पत्तिर्भवति। चतुर्दशलोकास्तु भूर्भुवःस्वर्महर्जनस्तपः सत्यमित्येतन्नामका उपर्युपरि वर्तमानाः, अतलवितलसुतलरसातलतलातलमहातल-पातालनामका अधोधो वर्तमानाः। चतुर्विधशरीराणि तु जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि। जरायुजानि मनुष्यपश्वादीनि। अण्डजानि पक्षिपन्नगादीनि। उद्भिज्जानि वृक्षलतादीनि। स्वेदजानि कृमिमशकादीनि। एतत्स्थूलशरीरावच्छिन्नो जीवो विश्व इत्युच्यते। विश्वस्येदं स्थूलशरीरं स्थूलभोगायतनत्वात् स्थूलशरीरम्, क्रियाशक्तिप्रधानत्वात् क्रियाशक्तिरत एव जाग्रत्, अन्नविकारत्वाच्चान्नमयकोश इति च व्यवह्रियते, "[१]जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः" इति **श्रुतेः**।।६।।

एवं स्थूलसूक्ष्मकारणप्रपञ्चानामाश्रयीभूतं सूक्ष्मचिदचिद्रूपशक्तिविशिष्टं यत्परशिवचैतन्यं तत्तुरीयमित्युच्यते, "[२]प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" इति **श्रुतेः**। तदेतत्तुरीयचैतन्यम्—"[३]सर्वं खल्विदं ब्रह्म", "[४]सर्वो वै रुद्रः" इत्यादि-श्रुतिप्रतिपाद्यसर्वपदवाच्यं[५] भवति। यथा नीलपदं न केवलं स्वस्यैव वाचकम्, अपि तु स्वविशिष्टोत्पलस्याऽपि; तथा चराचरप्रपञ्चवाचकसर्वपदमपि न केवलं चराचरप्रपञ्चवाचकम्,

---

१. माण्डूक्योपनिषदि, ३

२. माण्डूक्योपनिषदि, ७

३. छान्दोग्योपनिषदि, ३.१४.१

४. महानारायणोपनिषदि, १६

५. तुरीयचैतन्यस्य परशिवतत्त्वस्य सर्वकारणत्वहेतुना सर्वानुप्रवेशस्तावत् सिद्ध्यति। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। ततः सर्वनियन्तृत्वं सिद्ध्यति, "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेः। ततः सर्वशरीरत्वं सिद्ध्यति, "यः पृथिव्यां तिष्ठन्" इत्यन्तर्यामिब्राह्मणे नियम्यस्य पृथिव्यादेः सर्वस्यापि प्रपञ्चस्य नियन्तृशरीरत्वश्रवणात्। इदमेव जगज्जन्मादिकारणत्वहेतुना परम्परया सिद्ध्यत्सर्वशरीरत्वमिह सर्वात्मत्वं विवक्षितम्। इदं च "सर्वं खल्विदं ब्रह्म" इति समानाधिकरणनिर्देशस्य तावदुपपादकं भवत्येव। "ब्राह्मणो

---

विद्वान्'', ''ब्राह्मणो बृहस्पतिसवेन यजेत'' इत्यादिलौकिकवैदिकव्यवहारेषु शरीरवाचिशब्दानां शरीरिपर्यन्तत्वदर्शनादिति भाव:।

स्यादेतत्—शरीरवाचिनां शरीरिपर्यन्तत्वमसिद्धम्, तथानुशासनाभावात्, लौकिकवैदिकव्यवहारयो: शरीरात्मभ्रमसिद्धार्थावलम्बनत्वोपपत्ते:। अस्ति च भ्रमसिद्धार्थावलम्बनो वैदिकव्यवहार: ''उत्ताना वै देवगवा वहन्ति'' इत्यादि:। तथा च पर्यायेण सुरनरतिर्यगादि-सर्वदेहेष्वात्मभ्रमवति जीव एव ''सर्वं खल्विदं ब्रह्म'' इत्ययं भ्रमसिद्धसार्वात्म्यनिर्देश उपपद्यते, न तु परब्रह्मणि सर्वशरीरकत्वमात्रवति तत्तादात्म्यभ्रमरहिते, इत्याशङ्क्याह—**यथेति**। स्वस्य स्वीयस्य स्वाभिधेयस्य नीलस्येत्यर्थ:। तथा च नीलादिशब्दास्तावद्गुण-विशिष्टद्रव्यस्यापि वाचका:, नीलमुत्पलमित्यादिसमानाधिकरणव्यवहारदर्शनात्। न च मतुब्लोपात्तन्निर्वाह:, मतुब्लोपानुशासनस्य हि मतुब्लोपेनैव द्रव्याभिधानमिति नाभिप्राय:, शब्दाभावस्य शब्दकार्यकारित्वाभावात्। नापि लुप्तेन स्मृतेन मतुपा तदभिधानमिति तदभिप्राय:, मतुब्लोपस्य सिद्धशब्दान्वाख्यानार्थं वैयाकरणकल्पितत्वेन वस्तुतस्तत्र लुप्तस्य मतुपोऽभावात्। तस्मान्मतुब्लोपानुशासनेनापि नीलादिशब्दानां गुणविशिष्ट-द्रव्यवाचकत्वमेव सिद्ध्यति, मतुप्श्रवणे तल्लोपानुशासनबलात् तदर्थप्रत्ययावश्यम्भावे च सति नीलादिशब्दानामिव तज्जनकत्वपर्यवसानात्।

किमर्थं तर्हि मतुब्लोपानुशासनम्, समानाधिकरणव्यवहारादेव हि नीलादिशब्दानां गुणविशिष्टद्रव्यवाचकत्वं सिद्ध्यति? उच्यते—सन्ति नीलादिशब्दा: केवलगुणावाचका अपि, ''घटस्य नीलो गुण:'' इत्यादिव्यधिकरणव्यवहाराणामपि दर्शनात्। तथा च यथा गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां निष्कृष्टगुणपरत्वविवक्षायां नैल्यं नीलत्वं नीलिमेति भावप्रत्यय:, तथा तेषां निष्कृष्टगुणवाचिनां द्रव्यपरत्वविवक्षायां मतुप्प्रत्ययोऽपि भवेत्। दृश्यते हि पुण्यपापादिशब्दानां ''अयं पुरुष: पुण्य:, अयं पाप:'', ''अस्य पुण्यम्, अस्य पापम्'' इत्यादिद्विविधव्यवहारदर्शनाद् धर्माधर्मादिमात्रवाचकत्वेन तद्धर्मिपर्यन्तत्वेन च द्विविधानां धर्मधर्ममात्रवाचकानां धर्मिपर्यन्तत्वविवक्षायां पुण्यवान् पापवान् इत्यादिर्मतुबन्तव्यवहार:। तथाऽत्रापि तत्प्राप्तौ तद्व्यावृत्यर्थं मतुब्लोपानुशासनम्। तेन द्रव्यपर्यन्ता एव नीलादिशब्दा द्रव्येषु प्रयोक्तव्या:, गुणमात्रपर्यवसायिनोऽप्यभेदोपचारविवक्षायां प्रयोक्तव्या:। यथा—''साक्षान्नीलगुण एवेयं वनिता नीलिमैवेयम्'' इति कदापि गुणमात्रपर्यवसितानां द्रव्यपर्यन्तत्वविवक्षायां मतुबन्तप्रयोगो नास्तीति सिद्ध्यति। वार्त्तिककृताऽपि—''गुणवचनेभ्यो मतुपो लुक्'' इत्यनुशासनानन्तरमिदमेवं तस्य प्रयोजनमुक्तम्—''अव्यतिरेकात्सिद्धमिति चेत्, दृष्टो व्यतिरेक:'' इति। अत्राव्यतिरेकोऽव्यभिचार:। ततश्च शुक्लादिशब्दैरभिधीयमानानां गुणानां गुण्यव्यभिचाराद् गुणिना सहैवाभिधानात् शुक्लादिशब्दशक्त्यैव

अपि तु तद्विशिष्टशिवतत्त्वस्यापीति। अत उक्तम् —"[१]विग्रहं देवदेवस्य जगदेतच्चराचरम्। एतमर्थं न जानन्ति पशव: पाशगौरवात्।। विद्येति चेतनां प्राहुस्तथाऽविद्यामचेतनाम्।

---

गुण्यभिधानसिद्धेर्मतुब्लोपानुशासनं व्यर्थमिति शङ्का। "वस्त्रस्य शुक्ल:" इति गुणाभिधानस्य गुणिव्यभिचारो दृष्ट:। अत: केवलगुणाभिधायकशब्दस्य द्रव्यपर्यन्तत्वविवक्षायां ततो मतुपि प्राप्ते लुगनुशासनमिति व्यवहार:।

एतेन नीलादिशब्दा गुणमात्रवाचिन एव, अभेदोपचारावलम्बनस्तु 'नीलमुत्पलम्' इत्यादिसमानाधिकरणनिर्देशो "नीलिमैवेयं" इति निर्देशवदित्यपि शङ्का निरस्ता, गुणविशिष्टद्रव्यवाचिनां नीलादिशब्दानां भावे गुणवाचिनां नीलिमादिशब्दानामनिष्पत्ति-प्रसङ्गात्। गुणवाचिभ्यो भावप्रत्ययोत्पत्तौ हि तेषां गुणगतधर्मवाचित्वमेव स्यात्, न तु गुणवाचित्वम्। एतेनैवाभेदभ्रमशक्तिभ्रमाभ्यां समानाधिकरणनिर्देशनिर्वाहोऽप्यपास्त:। न चायमभ्रान्तव्यवहारसाधारणो निर्वाह:। ननु तथापि गुणमात्रवाचकानां नीलादिशब्दानां तद्विशिष्टेषु द्रव्येषु लक्षणया समानाधिकरणव्यवहार: सम्भवति, तत्सम्भवे च न तेष्वपि शक्त्यन्तरं कल्पनीयम्, गौरवात्। एवं च लक्षणानियमार्थं मतुब्लोपानुशासनम्। लक्षणीय-परनीलादिशब्दाद् भावप्रत्ययेन नीलिमादिशब्दनिष्पत्तिरिति सर्वं सङ्गच्छते।

अनयैव दिशा शरीरवाचिनो देवमनुष्यब्राह्मणादिशब्दा अपि आत्मपर्यन्ता:। न च तथा सति शरीरादिशब्दानामप्यात्मपरता स्यादिति वाच्यम्, तत्प्रवृत्तिनिमित्तस्य शरीरत्वस्य साक्षात् स्वापृथक्सिद्धाश्रय एव प्रवृत्तिनिमित्तत्वात्, देवमनुष्यादिशब्दानामिव तेषामात्मपर्यन्त-प्रयोगाभावेनातिप्रसङ्गवारणार्थं साक्षात्वविशेषणस्यावश्यकत्वात्। तस्मान्नीलादिशब्दानां द्रव्यपर्यन्तत्वदर्शनात् तद्रीत्या प्रपञ्चशब्दानामपि ब्रह्मपर्यन्तत्वं युक्तम्, "नीलो घट:" इत्यादिवत् "सर्वो वै रुद्र:" इत्यादिप्रयोगदर्शनेन तेषां नीलादिशब्दसमानत्वात्।

अत्रेदं बोध्यम्—येषां शब्दानां स्वप्रवृत्तिनिमित्ताश्रयमात्रे शक्ति: सम्भवति, तेषु नीलादिशब्दन्यायोपन्यास:। येषां शक्तौ तदाश्रये साक्षात्वविशेषणमपेक्षितम्, तेषां ब्रह्मवाचकत्वं न नीलादिशब्दन्यायेन सिद्ध्यति। किन्तु "सर्वो वै रुद्र:" इत्यादि-सामानाधिकरण्यं बहुभवनसङ्कल्पो नामरूपव्याकरणमिति प्रमाणै: सिद्ध्यति। अत एव ग्रन्थकारेण "सर्वपदमपि न केवलं चराचरप्रपञ्चवाचकम्, अपि तु तद्विशिष्टशिवतत्त्वस्यापि" इति नीलारुणदेवमनुष्यादिशब्दानामपृथक्सिद्धाश्रयसामान्यवाचित्वाद् ब्रह्मण: सर्वशब्दवाच्यत्वं प्रसाधितम्। एवं च रूपादिशब्दानां साक्षात्वाश्रय एव शक्तिरिति व्यवस्था नीलादिशब्दशक्तिवत् तस्या घटादिपर्यन्तत्वं मा भूदिति तन्मात्रव्यावर्तनार्थेति न तथा नामरूपव्याकरण-श्रुत्यादिसिद्धा ब्रह्मण: शक्तिर्व्यावर्तत इति सर्वं समञ्जसम्।

१. ब्रह्मण: शरीरलक्षणप्रदर्शनेन सर्वपदवाच्यत्वोपपादकं वायुसंहितावचनमुदाहरति— **विग्रहमिति**। विग्रहमिति छान्दसो लिङ्गव्यत्यय:। अनेन श्लोकेन सामान्यत: सर्वप्रपञ्चस्य परमेश्वरशरीरत्वं

विद्याविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभो:।। रूपमस्य न सन्देहो विश्वं तस्य वशे यत:। सत्ये साधौ च सच्छब्द: सद्भिरेव प्रयुज्यते।। विपरीते त्वसच्छब्द: कथ्यते वेदवादिभि:। सच्चासच्च जगद्विश्वं शरीरं परमात्मन:।।'' इति।

---

दर्शितम्। द्वितीयश्लोकेन विशिष्य चेतनाचेतनात्मकस्य तस्य तच्छरीरत्वं दर्शितम्। तस्य द्वितीयार्धे ''रूपमेव न सन्देह:'' इत्युक्त्या प्रपञ्चस्य तच्छरीरत्वं मुख्यमेव, न त्वौपचारिकमिति दर्शितम्। तदुपपादनार्थं शरीरलक्षणसूचनपूर्वकं प्रपञ्चे तदनुगति: ''विश्वं तस्य वशे यत:'' इत्युक्त्या दर्शिता। अनेन वश्यत्वरूपं नियम्यत्वं शरीरलक्षणमिति सूचितम्। स्वामिनियम्यभृत्यादिष्वतिव्याप्तिवारणार्थं यो यद्व्यापनेन नियच्छति, तत्तस्य शरीरमिति तल्लक्षणं विशेषणेन परिष्कर्तुं द्वितीयार्धे विभोरिति विशेषणेन तस्य स्वनियम्यप्रपञ्चव्यापकत्वमुक्तम्।

तदभिप्रायेणैव तस्य नामाष्टकनिर्वचनमपि सङ्गच्छते। ''शक्तितत्त्वादिभूम्यन्तं पृथिव्यादि घटादि च। व्याप्याधितिष्ठति शिवस्तस्माद्विष्णुरुदाहृत:।।'' इति। स्वामी भृत्यासंसृष्टस्तं नियच्छति। नाविको नावमारुह्य नियच्छन्नपि तदेकदेशे वर्तते। कृत्रिमव्याघ्र: पुमान् व्याघ्राकृतिदारु-चर्मादियन्त्रमनुप्रविश्य नियच्छन्नपि न तद्व्याप्याधितिष्ठति, हस्तपादादिकं वियुक्तावस्थापन्नं कदाचित्प्रेरणादिनाधितिष्ठन्नपि व्याप्य नावतिष्ठतीति न तेष्वतिव्याप्ति:। परस्परसंयोग-विशेषरूपावस्थाविशेषापन्नं तु हस्तपादादिकं शरीरमेवेति तस्य लक्ष्यत्वात् तत्र नातिव्याप्ति:। प्राणेन्द्रियवर्गस्यापि लिङ्गशरीरान्तर्गतत्वेन लक्ष्यत्वात् तत्रापि नातिव्याप्ति:। संसारिणश्चिच्छक्तिव्याप्त्या स्वशरीरे नियम्यप्रदेशानधिष्ठायैव नियच्छन्ति। मुक्ताश्चिच्छक्तिव्याप्त्यैव विश्वमधिष्ठाय नियच्छन्तीति न क्वाप्यव्याप्ति:।

इदं च जगज्जन्मादिब्रह्मलक्षणवत् कादाचित्कमुपलक्षणतया लक्षणं न विशेषणतया। अत: सुषुप्तशरीरस्य शरीरत्वापत्तिरिति दोषस्य नावकाश:। न चैवं सति मुक्तौ यावदधिष्ठास्यति चैत्रस्तावतस्तं प्रति संसारावस्थायामपि शरीरत्वापत्तिर्दोष:, इष्टापत्ते:। अत एव मनुष्यादिशरीरमात्रविषयपरिच्छिन्नाहंभावस्य भ्रान्तिरूपत्वमुपपद्यते। इदमेव शरीरलक्षणं सूचयितुम् ''य: पृथिव्यां तिष्ठन्'' इत्याद्यन्तर्यामिब्राह्मणे परमेश्वरस्य पृथिव्यादिषु बहिरन्तश्च व्याप्तिदर्शनपूर्वकं पृथिव्यादेस्तन्नियम्यत्वमुक्तम्। अत: श्रुतानुषक्तसर्वब्रह्मशब्दयोरैकार्थ्यस्यापि न हानि:। प्रपञ्चवाचिशब्दप्रवृत्तिनिमित्तानां साक्षात्परम्परासाधारण्येनापृथक्सिद्धस्वाश्रयमात्रे शब्दप्रवृत्तिनिमित्तताया: समर्थितत्वेन सर्वशब्द: प्रपञ्चे ब्रह्मणि चाभिधेये प्रवृत्तिनिमित्तभेदाभावात् प्रपञ्चब्रह्मणो- रुद्देश्यविधेयभावज्ञापक:। पदयो: प्रथमचरमभावस्तु वाक्यप्रमाणरूपत्वाद् ब्रह्मश्रुत्यनुग्रहाय बाध्य:। ''सर्वं खल्विदं ब्रह्म'' इत्युक्तार्थस्य हेतुसमर्पकस्येति करणस्य श्रुतित्वेऽपि ब्रह्मश्रुति-गर्भवाक्ये प्रवृत्तिमपेक्ष्य तदर्थस्येतिकरणेन हेतुत्वं वक्तव्यमिति प्रथमप्रवृत्तब्रह्मश्रुत्यनुग्रहाय ब्रह्मण: सर्वशरीरत्वे प्रतिपाद्यमाने तत्समानसंवित्संवेद्यं सर्वस्य ब्रह्मशरीरत्वं तेन हेतुतयोच्यत इति समर्थनीयमित्यलम्।

अत्रेदं बोध्यम्—एतद्भोगायतनं चतुर्विधसकलस्थूलशरीरजातम्, भोग्यरूपान्नपानादिकम्, एतदायतनभूतभूरादिचतुर्दशभुवनानि, एतदायतनभूतं ब्रह्माण्डं चैतत्सर्वं स्थूलप्रपञ्चस्तत्कारणी-भूतसूक्ष्मभूतानि सूक्ष्मशरीरजातं चैतत्सर्वं स्थूलाचेतनशक्तिस्वरूपं भवति। एतत्कारणीभूतं बिम्बस्थानीयं कलादिपञ्चकं कारणशरीरजातं चैतत्सर्वं स्थूलाचेतनशक्तिस्वरूपं भवति। अत एतत्समस्तचेतनाचेतनात्मकप्रपञ्चे व्यापकभावमापन्नेन परशिवेन नियम्यत्वादेतत्सर्वं तच्छरीररूपमेवेति। न चैवं सति परशिवस्य स्थूलचिदचिद्रूपशक्तिविशिष्टत्वे जीवलक्षणातिव्याप्तिरिति वाच्यम् वैशिष्ट्यस्य सम्बन्धभेदस्वीकारेण तद्दोषवारणसम्भवात्। सम्बन्धस्तु लक्षणे स्वतादाम्यापृथग्-भावान्यत सम्बन्धः। अत्र तु स्वामित्वादिसम्बन्ध इति।।७।।

एवं स्वतादात्म्यापृथग्भावान्यतरसम्बन्धेन कलादिभूम्यन्तस्थूलचिदचिद्रूप-शक्तिविशिष्टत्वादस्य जीवचैतन्यस्य सर्वकर्तृत्व-सर्वज्ञत्व-पूर्णत्व-नित्यत्व-व्यापकत्वरूपाः सूक्ष्मशक्तयः सङ्कोचवत्यो भवन्ति। तस्मादस्याप्रतिहतस्वातन्त्र्यरूपेच्छाशक्तिः सङ्कुचिता सती अपूर्णम्मन्यतारूपमाणवमलमित्युच्यते। ज्ञानशक्तिः सङ्कुचिता सती सर्वज्ञत्वस्य किञ्चिज्ज्ञत्वाप्तेरन्तःकरणबुद्धीन्द्रियसम्बन्धवशाद् भेदवेद्यप्रथारूपं मायीयं मलमित्युच्यते। एवं क्रियाशक्तिः सङ्कुचिता सती सर्वकर्तृत्वस्य किचित्कर्तृत्वाप्तेः कर्मेन्द्रिसम्बन्धवशात् शुभाशुभानुष्ठानमयं कार्ममलमित्युच्यते। तथा चोक्तं **शिवादित्यचरणैः**—"मलोपहतचैतन्यं कलाविद्यासमाश्रयम्। रागेण रञ्जितात्मानं कालेन कलितं तथा।। नियत्या यमितं भूयः पुंभावेनोपबृंहितम्। प्रधानाशयसम्पन्नं गुणत्रयसमन्वितम्।। बुद्धितत्त्वसमासीनमहङ्कारसमावृतम्। मनसा बुद्धिकर्माक्षैस्तन्मात्रैः स्थूलभूतकैः।। संयुतं जीवमित्याहुः संसारावृतलक्षणम्।।" इति। अतो मलत्रयविशिष्टे संसारतापसन्तप्ते जीवे स्थूलचिदचिद्रूपशक्तिविशिष्टत्वरूप-लक्षणसमन्वये न कोऽपि दोषावकाश इति सुधीभिरेव विभावनीयम्।

।। इति जीवतत्त्वविवेकः।।

*।। इति द्वितीयः परिच्छेदः ।।*



# तृतीयः परिच्छेदः

एवं सूक्ष्मस्थूलप्रपञ्चाकारशक्त्युपाधिभेदेन शिवजीवयोर्भेदो निरूपितः। इदानीं तयोरभेदात्मकं शिवाद्वैतं निरूप्यते। शिवाद्वैतमित्यत्र शिवश्च शिवश्च शिवौ, तयोरद्वैतं शिवाद्वैतमिति व्युत्पत्तिबललभ्यं प्रथमशिवपदं सूक्ष्मचिदचिद्रूपशक्तिविशिष्टब्रह्मबोधकं भवति। अपरं शिवपदं स्थूलचिदचिद्रूपशक्तिविशिष्टजीवबोधकं भवति। अद्वैतपदं च तयोरभेदबोधकं भवति। तथा च स्वशक्तिपरिणामवशान्मलत्रयसम्बन्धेन शरीरत्रयावच्छिन्नं सत् स्वस्वरूपगोपनावशेन जीवभावमापन्नं यत्परशिवतत्त्वं तत्स्वशक्तिविकास-वशान्मलत्रयापगमेन शरीरत्रयानवच्छिन्नं सत्स्वस्वरूपानन्दरसनिर्भरं स्वयमेव भवतीति न तयोरात्यन्तिकभेद उपपद्यत इति। तथा चोक्तम्—"चैतन्यमात्मनो रूपं सच्चिदानन्दलक्षणम्। तस्यानावृतरूपत्वात् शिवत्वं केन वार्यते।।" इति।।१।।

न च विरुद्धशक्तिविशिष्टयोः शिवजीवयोरात्यन्तिकभेद एव प्रतीयते, कथं तयोरभेद उपपद्यत इति वाच्यम्, सूक्ष्मचिदचिद्रूपशक्तिविशिष्टशिवस्य कारणत्वम्, स्थूलचिदचिद्रूपशक्तिविशिष्टस्य तस्य कार्यत्वमिति वदतामस्माकं मते कार्यकारणयो-रभेदपर्यवसानेनात्यन्तिकभेदस्य सुदूरपराहतत्वात्। न चोपादानोपादेययोरात्यन्तिकभेदो दृष्टचरः, पिण्डत्वेन घटत्वेन पिण्डघटयोर्भेदेऽपि मृण्मयत्वेन तयोरभेदबोधस्य सार्वजनीनत्वात्, विशिष्टस्य विशिष्टं प्रति विशेषणस्य विशेषणं प्रति उपादानोपादेयभावाङ्गीकारेण च तत्तच्छक्त्योरप्यभेदबोधसम्भवात्। न च तदवच्छेदकतावच्छेदकयोः सूक्ष्मत्वस्थूलत्वयोर्भेदेन तद्विशिष्टशक्त्योरपि भेदो युक्तः, चिदचिद्रूपत्वेन तयोरभेदस्यैव पर्यवसानात्। तस्माज्जीवब्रह्मणोरभेदाङ्गीकारे "[१]द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचा-

---

१. मुण्डकोपनिषदि, ३.१.१; अत्रायमाशयः—"द्वा सुपर्णा" इति श्रुतौ जीवब्रह्मणोर्भेदः प्रतिपादितो भवति। एवम्—"द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च" इत्यत्रापि। "एकमेवाद्वितीयं ब्रह्म। नेह नानास्ति किञ्चन, नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्यादौ, "एक एव रुद्रो न द्वितीयाय तस्थे" इत्यत्र, "यत्र नान्यत्पश्यति नान्यच्छृणोति" इत्यादौ च जीवब्रह्मणोरभेदः प्रतिपाद्यत इति परस्परश्रुतिविरोधान्न केवलं द्वैतं नाप्यद्वैतं मन्तुं शक्यते, अपि तु द्वैताद्वैतरूपशक्तिविशिष्टाद्वैतपक्ष एव मन्तव्यः।

कशीति।।", "द्वे ब्रह्मणी वेदितव्ये परंचापरमेव च" इति भेदप्रतिपादकवाक्यविरोधेन भेदाङ्गीकारे, "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन", "एक एव रुद्रो न द्वितीयाय तस्थे", "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यभेदविधायकवाक्यविरोधेन चोभयोरप्रामाण्यप्रसक्त्या शक्तिविशिष्टाद्वैतपक्ष एवाङ्गीकरणीयः। एतत्पक्षे तु सूक्ष्मस्थूलचिदचित्प्रपञ्चाकारशक्तिविशिष्टयोरभेदमादायाद्वैतवाक्यानां विशेषणविशेष्यभेदमादाय द्वैतवाक्यानामपि प्रामाण्यसिद्ध्या विरोधाभावात्।।२।।

नन्वस्तु कार्यकारणयोरभेदमादाय तयोरद्वैतसिद्धिः, किन्तु शरीरत्रयावच्छिन्नजीवस्य तदनवच्छिन्नेन शिवेन सहाभेदबोधासम्भवेन[१] तयोरात्यन्तिकभेदस्य दुर्वारत्वादिति चेदुच्यते—[२]यथा घटमठाद्युपाध्यवच्छिन्नस्याकाशस्योपाधिभेदेन भेदोपपादनेऽपि तदनवच्छिन्नेन महाकाशेन सहाभेदबोध उपपद्यते, तथा तत्तच्छरीरावच्छिन्नस्य जीवचैतन्यस्य तत्तच्छरीरभेदेन भेदोपपादनेऽपि तदनवच्छिन्नेन शिवचैतन्येन सहाभेदबोध उपपद्यते। तथा च श्रूयते **वातुलोत्तरे**—"महद्घटप्रभेदेन यथाकाशः प्रतीयते। प्रतीयते तथा चैकं स्थलं लिङ्गाङ्गभेदतः।।" इति।

---

तदर्थस्तु—शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टे शक्तिविशिष्टे, तयोरद्वैतं शक्तिविशिष्टाद्वैतमिति। अत्र प्रथमशक्तिपदेन सूक्ष्मचिदचिद्रूपप्रपञ्चाकारा शक्तिरुच्यते। अपरशक्तिपदेन स्थूलचिदचिद्रूपप्रपञ्चाकारा शक्तिरुच्यते। तच्छक्तिद्वयविशिष्टपदेन शिवजीवावुच्येते। तयोरद्वैतमकत्वमस्तीति सिद्धान्तस्वरूपम्। अर्थात् सूक्ष्मावस्थापन्नशक्तिविशिष्टस्य स्थूलावस्थापन्नशक्तिविशिष्टस्य चान्तर्यामिप्रधानभूतं नियामकं परशिवतत्त्वमेकमेव, तस्य चेतनानां जीवानामन्तर्यामिचेतनरूपत्वात्, तदपेक्षया "नान्योऽतोऽस्ति द्रष्टा" इत्यादि, "नान्यच्छृणोति" इत्यादि च श्रुतिवाक्यमुपपद्यते। शरीरेन्द्रियाद्यनेकवस्तुवैशिष्ट्येऽपि देवदत्त एक एवेदानीं स्वगृहेऽस्तीति व्यवहारस्य प्रवृत्तिवत् "एकमेवाद्वितीयं ब्रह्म" इत्युपपन्नम्। "द्वा सुपर्णा" इति तु स्वरसतयैवोपपन्नमिति न कस्या अपि श्रुतेर्विरोध इत्याह—**विरोधाभावादिति**।

१. **अभेदबोधासम्भवेनेति**। यद्यप्यभेदबोधे प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदोऽपि तन्त्रम्, यथा "नीलो घटः" इत्यत्र नीलत्वघटत्वयोः, अत एव "घटो घटः" इत्यादौ नाभेदबोध इति जीवब्रह्मणोरुपाध्योर्भेदे नाभेदबोधस्य प्रतिकूलः, अपि तु उक्तदिशाऽनुकूल एव भवति; तथाऽपि तयोः शरीरेन्द्रियाद्यनेकवस्त्ववच्छिन्नत्वानवच्छिन्नत्वनिबन्धनगतसर्वज्ञत्वकिञ्चिज्ज्ञत्वयोर्विरुद्धत्वाद् भागत्यागलक्षणोपादीयते, नीलत्वघटत्वयोर्भिन्नत्वेऽपि विरुद्धत्वाभावान्न तादृशलक्षणापेक्षेत्यग्रे स्फुटीभविष्यति।

२. दृष्टान्तपुरःसरेण सङ्गमयति—**यथेति**।

अत्रेदं बोध्यम्—पूर्वोक्तदिशा सच्चिदानन्दस्वरूपं नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टस्वरूपलक्षणं सकलजगज्जन्माद्युपलक्षणं सर्वविलक्षणं सर्वात्मकं यत्परशिवचैतन्यं तत् स्थलशब्देनाभिधीयते, "स्थीयते लीयते यत्र तत्स्थलं ब्रह्म शाश्वतम्", "स्थाणौ सर्वाश्रयेऽनन्ते सच्चिदानन्दरूपिणि। यस्मिन् ब्रह्मणि लीयेत प्रपञ्चस्तत्स्थलं स्मृतम्।।" **इत्याद्यागमोक्तेश्च**। यदा तत्परशिवचैतन्यं नामरूपविभागार्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं भवति, तदा विरूपाक्षत्व-कृष्णपिङ्गलत्व-नीलकण्ठत्वादिविशिष्टपञ्चविंशतिलीलामङ्गलस्वरूपस्वभावं भवशिवशर्वमहादेवपरमेश्वराद्यष्टाभिधानवाचकं सर्वज्ञत्व-नित्यतृप्तत्व-अनादिबोधत्व-स्वतन्त्रशक्तिमत्त्व-अलुप्तशक्तिमत्त्व-अनन्तशक्तिमत्त्वरूपा साधारणधर्मविशिष्टं महेश्वरतत्त्वमित्युच्यते। यदाऽस्य महेश्वरस्य सर्वज्ञत्वादय: शक्तय: कलारूपेण परिणमन्ति, तदैतल्लिङ्गपदवाच्यं भवति।

एवं स्थूलचिदचिद्रूपशक्तिविशिष्टो जीवोऽनेकजन्मार्जितसुकृतजन्यस्वकर्मपरिपाकवशेन विनष्टमलवासनो नित्यानुष्ठितशिवार्चनशिवाचारादिजनितशिवप्रसादप्रभावेण शुद्धान्त:करणो यदा जायते, यदाऽस्य जीवस्य किञ्चिज्ज्ञत्व-किञ्चित्कर्तृत्वादिशक्तयो भक्तिरूपेण परिणमन्ति, तदाऽयं[१] जीवोऽङ्गपदवाच्यो भवति। सोऽयमङ्गपदवाच्यो जीव: शिवभक्तिप्रभावोन्मिषन्माहेश्वरशक्तिपातवशेन शरीरादिभिन्न: प्रत्यगात्माहमित्यात्मानात्मविचारविचक्षण: स्रक्चन्दनवनितादिविषयसुखस्य ज्योतिष्टोमादिजन्यस्वर्गादिसुखस्य च नश्वरत्वं मन्यमानोऽस्मिन् जननमरणादिदु:खकलुषिते संसारेऽसारतामनुभवन् संसारानुरागं परित्यजति।

एवं पिण्डतापिण्डविज्ञानसंसारहेयस्थलसम्पन्नो जीव: संसारनाशकं घनलिङ्गपर्यायवाचकं परं ब्रह्म जिज्ञासुरुपहारपाणि: सन् शिवसिद्धान्ततत्त्वज्ञं शिष्यसन्देहविच्छेदकं सर्वतन्त्रस्वतन्त्रमाचार्यकुलसञ्जातमष्टावरणविशिष्टज्ञानप्रतिपादकं लिङ्गाङ्गसामरस्यरहस्यबोधकं श्रोत्रियं ब्रह्मनिष्ठं भगवन्तं श्रीगुरुमुपसृत्य तमनुसरति, "[२]परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत: कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणि: श्रोत्रियं ब्रह्मनिष्ठम्।।" इति **श्रुते:**।

---

१. जीवस्य अङ्गपदवाच्यत्वमाह—**अयं जीव इति**। अत्रेदं मन्तव्यम्—अङ्गपदस्य रूढिशक्त्या शरीरवाचित्वेऽपि—"यस्य चात्मा शरीरम्", "यस्य चाव्यक्तं शरीरम्" इत्याद्यन्तर्यामिब्राह्मणेन पृथिव्यादिजीवात्मपर्यन्तस्य सकलस्य वस्तुजातस्य ब्रह्म-शरीरत्वबोधनाद् जीवात्मनोऽप्यङ्गपदवाच्यत्वे न काप्यनुपपत्तिरिति। अनयैव दिशा ब्राह्मणेन शरीरेणात्मनो ब्राह्मणत्वब्राह्मणा भेदव्यवहारवद् ब्रह्मण: शरीरभूतेन जीवात्मना ब्रह्मणो जीवाभेदव्यवहारोऽपि नानुपपन्नो भवतीति तत्त्वम्।

२. मुण्डकोपनिषदि, १.२.१२

अथ स करुणासागर: श्रीगुरु: स्वसन्निधिं समागतं सर्वलक्षणलक्षितं स्वशिष्यं परमकृपया शिवदीक्षायां नियोजयन् आदौ हस्तमस्तकसंयोगरूपवेधादीक्षया शिष्यस्य योगाङ्गापरनामककारणाङ्गावच्छिन्ने जीवे भावलिङ्गं संयोज्य, पञ्चाक्षरीमहामन्त्रोपदेशरूपमनुदीक्षया भोगाङ्गापरनामकसूक्ष्माङ्गावच्छिन्ने जीवे प्राणलिङ्गं संयोज्य, कुण्डमण्डपपञ्चकलशादिस्थापनपूर्वकशिवकलाविन्यासरूपक्रियादीक्षया त्यागाङ्गापरनामकस्थूलाङ्गावच्छिन्ने जीवे इष्टलिङ्गं योजयित्वा, जीवात्मनि षडध्वन्यासपूर्वकशिवलिङ्गमूर्तिं संस्थाप्य, लिङ्गे शिष्यप्राणान् समादाय तदिष्टलिङ्गं शिष्यहस्ते निधाय करतलामलकन्यायेन शिष्यहस्तस्थितमिष्टलिङ्गं निर्दिश्य सकल**श्रुत्यागमपुराण**प्रसिद्धाष्टावरणपञ्चाचारविशिष्टतया घनलिङ्गैक्यरूपमोक्षसाधननिरुत्तरैकोत्तरशतस्थलगर्भीकृतषट्स्थलप्रतिपादकसिद्धान्तशास्त्रप्रतिपाद्यज्ञानक्रियापरिभेदेन रूपपदार्थसमर्पणप्रकारीभूताङ्गलिङ्गशक्तिभक्तिहस्तमन्त्रमुखपदार्थानुसन्धानाश्रयषड्भेदभिन्नस्थानावयवीभूतेष्टलिङ्गप्राणलिङ्गभावलिङ्गपूजारूपोसनात्रैविध्यैकतानमानसत्वेन लिङ्गाङ्गसामरस्यापरनामकशिवाद्वैत-विद्यामुपदिशति, "[१]तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।।" इति **श्रुतेः**।।३।।

अथ [२]लिङ्गाङ्गसामरस्यरहस्यप्रकारो वर्ण्यते। तथाहि— सच्चिदानन्दस्वरूपं परशिवतत्त्वापरनामकं घनलिङ्गं स्वशक्तिपरिणामरूपकलाभेदेन सत्ताकलाविशिष्टं सद् भावलिङ्गम्, चित्कलाविशिष्टं सत् प्राणलिङ्गम्, आनन्दकलाविशिष्टं सदिष्टलिङ्गमिति त्रिविधं भवति। पुनरेतल्लिङ्गत्रयं स्वगतोपाधिभेदेन प्रत्येकं द्विविधं द्विविधं भवति। तत्र भावलिङ्गं शान्त्यतीतोत्तरकलाविशिष्टं महालिङ्गं शान्त्यतीतकलाविशिष्टं प्रसादलिङ्गमिति द्विविधं भवति। प्राणलिङ्गं तु शान्तिकलाविशिष्टं जङ्गमलिङ्गं विद्याकलाविशिष्टं शिवलिङ्गमिति द्विविधं भवति। इष्टलिङ्गं प्रतिष्ठाकलाविशिष्टं गुरुलिङ्गं निवृत्तिकलाविशिष्टमाचारलिङ्गमिति द्विविधं भवति। तथा चोक्तम्—"[३]घनलिङ्गं महाभासं सच्चिदानन्दलक्षणम्। निष्कलं निष्क्रियं शान्तं स्वतन्त्रं स्वप्रकाशि तत्।। सर्वेषां स्थानभूतत्वाल्लयभूतत्वतस्तथा। तत्त्वानां महदादीनां स्थलमित्यभिधीयते।। स्थाणौ सर्वाश्रयेऽनन्ते सच्चिदानन्दरूपिणि। यस्मिन् ब्रह्मणि लीयेत प्रपञ्चस्तत्स्थलं स्मृतम्।। स्वशक्तिक्षोभमात्रेण स्थलं तद्

---

१. मुण्डकोपनिषदि, १.२.१३

२. लिङ्गाङ्गयो: शिवजीवयो: सामरस्यमेकरसत्वं परस्परनित्यसम्बन्धित्वमिति यावत् ।

३. **वातुलागमे** ।

द्विविधं भवेत्। एकं लिङ्गस्थलं प्रोक्तमन्यदङ्गस्थलं स्मृतम्। लिङ्गस्थलं त्रिधा ज्ञेयं भावप्राणेष्टभेदतः। प्रथमं भावलिङ्गं स्याद् द्वितीयं प्राणलिङ्गकम्।। तृतीयमिष्टलिङ्गं स्यादित्येवं त्रिविधं स्मृतम्। एकमेकं स्थलं भूयो द्विविधं द्विविधं भवेत्।। महालिङ्गं प्रसादाख्यं भावलिङ्गविभागजम्। प्राणलिङ्गाज्जङ्गमाख्यं शिवलिङ्गं च भिद्यते।। गुरुलिङ्गं तथाचारलिङ्गमिष्टविभागतः।।" इति।।४।।

एवं जीवापरवाचकाङ्गस्थलं स्वगतभक्त्युपाधिभेदेन विशुद्धभक्तिविशिष्टं योगाङ्गं विचारभक्तिविशिष्टं भोगाङ्गं विधेयभक्तिविशिष्टं त्यागाङ्गमिति त्रिविधं भवति। पुनरेतदङ्गत्रयं स्वगतभक्त्युपाधिभेदेन प्रत्येकं द्विविधं द्विविधं भवति। तत्र योगाङ्गं समरसभक्तिविशिष्टमैक्यस्थलम्, आनन्दभक्तिविशिष्टं शरणस्थलमिति द्विविधं भवति। भोगाङ्गमनुभवभक्तिविशिष्टं प्राणलिङ्गिस्थलम्, अवधानभक्तिविशिष्टं प्रसादिस्थलमिति द्विविधं भवति। त्यागाङ्गं नैष्ठिकभक्तिविशिष्टं माहेश्वरस्थलम्, श्रद्धाभक्तिविशिष्टं भक्तस्थलमिति द्विविधं भवति। तदुक्तम्—"अङ्गस्थलं तथा प्रोक्तमाचार्यैः सूक्ष्मदर्शिभिः। योगाङ्गं प्रथमं प्रोक्तं भोगाङ्गं च द्वितीयकम्। त्यागाङ्गं च तृतीयं स्यादित्येवं त्रिविधं स्मृतम्। योगाङ्गमैक्यं शरणस्थलमित्युभयं भवेत्।। प्राणलिङ्गी प्रसादीति द्वयं भोगाङ्गमिष्यते। माहेश्वरस्थलं भक्तस्थलमित्युभयस्थलम्।। त्यागाङ्गं भवतीत्येव प्रोच्यते तत्त्वदर्शिभिः।।" इति।।५।।

एवमत्रानुग्राहकत्वाल्लिङ्गस्थलमुपास्यम्, अनुग्राह्यत्वादङ्गस्थलमुपासकं भवति। उपासनाया द्वैतभावनिवृत्तिहेतुत्वात्तयोरुपास्योपासकभावमापन्नयोर्लिङ्गाङ्गयोर्भ्रमर-कीटन्यायेनाभेद[1] एव स्थास्यति। न च शरीरत्रयावच्छिन्नस्याङ्गपदवाच्यजीवस्य शरीरत्रयानवच्छिन्नेन लिङ्गपदवाच्यशिवेन सह कथमभेदः स्थास्यतीति वाच्यम्, "सर्वेष्वङ्गेषु सर्वत्र सर्वदा सर्वतोमुखम्। लिङ्गं गुरूपदेशेन सुप्रतिष्ठितमात्मनि।। प्रकाशति ततोऽमुष्य चेतनस्य निरन्तरम्।" इति वातुलोत्तरवचनेन श्रीमद्गुरुणा [2]दीक्षात्रयेणास्य जीवस्य

---

१. यथा भ्रमरध्यानासक्तः कीटो भ्रमर एव भवति, तथा शिवध्यानासक्तो जीवः शिव एव भवतीति मोक्षदशायां तयोरभेद एवेति भावः। तथा चोक्तम् — "यथा भ्रमरयोगेन कीटोऽपि भ्रमरायते। मानवः शिवयोगेन शिवः सञ्जायते तथा।।", "शिवयोगरतो योगी शिव एव न संशयः" इत्याद्यागमोक्तेश्च।

२. "तनुत्रयगतानादिमलत्रयमसौ गुरुः। दीक्षात्रयेण सन्दग्ध्वा लिङ्गत्रयमुपादिशत्।।" इति **दिव्यागमे**।

मलत्रयमपनोद्य शरीरत्रये स्थापितलिङ्गत्रयसम्बन्धात् सर्वाङ्गलिङ्गमयत्वेनास्य सर्वेन्द्रियेषु सर्वशरीरेषु च सर्वं लिङ्गमयमेव भवतीति कुतोऽस्य शरीरत्रयावच्छिन्नत्वशङ्कावकाशः। यथा कलारूपेण शरीरत्रयावच्छिन्नमपि लिङ्गं तदनवच्छिन्नं भवति, तथा भक्तिरूपेण शरीरत्रयावच्छिन्नमप्यङ्गं तदनवच्छिन्नं भवति। तथा च श्रूयते—"शक्तिरेव स्मृता भक्तिर्भक्तिरेव हि स सदा। शक्तिभक्त्योर्न भेदोऽस्ति परमार्थनिरूपणे।। शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता। शक्त्या प्रपञ्चसृष्टिः स्यात् भक्त्या तद्विलयो मतः।। शक्तिर्वैचित्र्यतो रूपं नीरूपमपि याति हि। भक्तिर्वैचित्र्यतो रूपमपि नीरूपतामियात्।। प्रपञ्चवृद्ध्यपेक्षा हि शक्तेः स्वाभाविको गुणः। प्रपञ्चसंक्षयापेक्षा भक्तेः स्वाभाविको गुणः।। अधोमुखी भवेच्छक्तिः भक्तिरूर्ध्वमुखी भवेत्। समाया शक्तिराख्याता निर्माया भक्तिरीरिता।। अपि तर्कप्रमाणाभ्यां शक्तेर्भक्तिर्गुणाधिका। उपास्यत्वं भवेच्छक्त्या भक्त्योपासकता भवेत्।। तस्माल्लिङ्गस्थले शक्तिर्भक्तिरङ्गस्थले स्थिता। लिङ्गस्थलं शिवः साक्षाद् जीवात्माङ्गस्थलं भवेत्।। लिङ्गाङ्गस्थलयोरैक्यं शिवजीवैक्यमेव हि।।" इति।।६।।

ननु भवदुक्तरीत्या जीवस्य सर्वाङ्गलिङ्गमयत्वं कथमुपपद्यते? शरीरत्रयस्य यत्किञ्चित्स्थाने लिङ्गत्रयस्य योजनादिति चेदुच्यते—शरीरत्रयस्य यत्किञ्चित्स्थाने लिङ्गत्रयस्य योजनेऽपि तल्लिङ्गत्रयं महालिङ्गादिभेदेन षड्विधं भूत्वा सर्वाङ्गमावृत्य तिष्ठति। एवं क्रमेण सर्वेन्द्रियेष्वपि तत्तल्लिङ्गस्य योजनमवगन्तव्यम्। तदुक्तम्—"आचारलिङ्गं घ्राणाख्यं भक्तस्थलसमाश्रयम्। निवृत्तिकलयोपेतं गन्धग्रहणसाधनम्।। गुरुलिङ्गं तु जिह्वाख्यं माहेशस्थलसंश्रयम्। प्रतिष्ठाकलयोपेतं रसग्रहणसाधनम्। शिवलिङ्गं तु नेत्राख्यं प्रसादिस्थलसंश्रयम्। विद्याकलासमोपेतं रूपग्रहणसाधनम्।। त्वगाख्यं चरलिङ्गं तु प्राणलिङ्गिस्थलाश्रयम्। शान्त्याख्यकलयोपेतं स्पर्शग्रहणसाधनम्।। प्रसादलिङ्गं श्रोत्राख्यं शरणस्थलसंश्रयम्। शान्त्यतीतकलोपेतं शब्दग्रहणसाधनम्।। मानसं तु महालिङ्गमैक्यस्थलसमाश्रयम्। शान्त्यतीतोत्तरोपेतं सर्वग्रहणसाधनम्।। एवं कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गस्य योजनम्। ज्ञातव्यं योगिभिः सर्वं तत्तल्लिङ्गानुभावतः।।" इति।।७।।

अत्र यद्यपि महालिङ्गादिषड्विधलिङ्गानां स्थानानि तु ब्रह्मरन्ध्रादिषड्विधचक्राण्येव, तत्तच्चक्रेष्वेव तेषां प्रत्यक्षयोग्यत्वात्, तथापि तत्तच्चक्रस्थितान्यपि लिङ्गानि तत्तदिन्द्रियद्वारा तत्तत्पदार्थानुसन्धातृरूपत्वात् तत्तदिन्द्रियाणां तत्तल्लिङ्गमुखत्वं व्यपदिश्य लिङ्गस्वरूपत्वमुपवर्णितम्। अयमेव क्रमः **केनोपनिषदि**—"ॐ केनेषितं पतति प्रेषितं मनः" इत्युपक्रम्य "श्रोत्रस्य श्रोत्रं मनसो मनः" इत्यादिनेन्द्रियाणां तत्तल्लिङ्गमुखत्वमुपवर्ण्य

"यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।।" इत्यादिना तत्तत्पदार्थानुसन्धा तृरूपोपास्यवस्तुविधानेनोपदर्शित:। **वातुलोत्तरेऽपि**— "[१]घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते। जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत्।। चक्षुषश्च तथा चक्षु: शिवलिङ्गमुखं भवेत्। त्वचस्त्वक् चररूपस्य लिङ्गस्य मुखमुच्यते।। मुखं प्रसादलिङ्गस्य श्रोत्रं श्रोत्रस्य कथ्यते। हृदयं हृदयस्यैव महालिङ्गमुखं भवेत्।। एवं लिङ्गमुखं ज्ञेयं तत्तदङ्गे प्रतिष्ठितम्।।" इति विस्तरेण प्रपञ्चितम्, विस्तरभयान्नेह लिख्यते।।८।।

एवं जाग्रत्स्वप्नसुषुप्त्यात्मकावस्थात्रयसम्बन्धेन स्थूलसूक्ष्मकारणशरीरावच्छिन्नो विश्वतैजसप्राज्ञरूपो जीव: स्वगुरुणा दीक्षात्रयेण शरीरत्रये योजितलिङ्गत्रयान्तर्भूतषड्विधलिङ्गेभ्य-स्तत्तत्पदार्थार्पणानुसन्धानद्वारा घनलिङ्गैक्यरूपमहानन्दमनुभवति। तथा च— "रुद्रेणात्तमदन्ति रुद्रेण पीतं पिबन्ति रुद्रेणाघ्रातं जिघ्रन्ति तस्मात् प्रशान्तमनसा ब्राह्मणा:" इत्यादि**श्रुते:**। तत्र भक्तस्तावदाचारलिङ्गस्य क्रियाशक्तियुक्तस्य श्रद्धाभक्त्या सुचित्तहस्तेन गन्धपदार्थं धृत्वा नकारमन्त्रमनुस्मरन् घ्राणेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति। माहेश्वरो हि गुरुलिङ्गस्य ज्ञानशक्तियुक्तस्य नैष्ठिकभक्त्या सुबुद्धिहस्तेन रसपदार्थं धृत्वा मकारमन्त्रमनुस्मरन् रसनेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति। प्रसादी तु शिवलिङ्गस्येच्छाशक्तियुक्तस्य सावधानभक्त्या निरहङ्कारहस्तेन रूपपदार्थं धृत्वा शिकारमन्त्रमनुस्मरन् नेत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा आनन्दी भवति। प्राणलिङ्गी तु आदिशक्तियुक्तस्य जङ्गमलिङ्गस्य अनुभवभक्त्या

---

१. अत्र — "घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते" इत्यादिना घ्राणेन्द्रियादीना-माचारादिलिङ्गमुखत्वमुच्यते, न तु लिङ्गरूपत्वम्, अनित्याचेतनानामिन्द्रियाणां नित्यचेतनरूप-लिङ्गस्वरूपत्वासम्भवात्। ननु तेषां लिङ्गस्वरूपत्वाभावेऽपि लिङ्गस्थानत्वेनोपवर्णने न काप्यनुपपत्ति:, तत एव तेषां लिङ्गमुखत्वमप्युपयुज्यते? इति चेन्न, आधारादिषड्विधचक्राण्येव आचारादिषड्विधलिङ्गस्थानानीति ग्रन्थकारेणानुपदमेवोक्तत्वात्। अत:—"घ्राणस्य घ्राणम्" इत्यत्र घ्राणस्य घ्राणपदोपलक्षितस्याधारचक्रस्थितस्याचारलिङ्गस्य घ्राणं घ्राणेन्द्रियं मुखमुच्यत इत्यर्थो ग्राह्य:। पूर्वोदाहृते—"आचारलिङ्गं घ्राणाख्यम्" इति वाक्येऽप्युपलक्षणविधयैव घ्राणपदस्याचारलिङ्गेऽन्वय:, न तु विशेषणविधया। अयमेवार्थ: केनोपनिषदि स्पष्टीकृत इत्यवधातव्यम्।

सुमनोहस्तेन स्पर्शपदार्थं धृत्वा वाकारमन्त्रमनुस्मरन् त्वगिन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वानन्दी भवति। शरणस्तु पराशक्तियुक्तस्य प्रसादलिङ्गस्य आनन्दभक्त्या सुज्ञानहस्तेन शब्दपदार्थं धृत्वा यकारमन्त्रमनुस्मरन् श्रोत्रेन्द्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वानन्दी भवति। ऐक्यस्तु चिच्छक्तियुक्तस्य महालिङ्गस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमन्त्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसादभोगी भूत्वानन्दी भवति। एवं समर्पितवतो जीवस्य ज्ञप्ते ब्रह्मणि विश्रमितत्वात् "ॐकारो वदनं देवि नमःकारौ भुजद्वयम्। शिकारो देहमध्यस्तु वायकारौ पदद्वयम्।। पीठं पादादिजान्वन्त-मानाभेर्मध्यमीरितम्। हृदयान्तं वर्तुलं स्यात् कण्ठान्तं गोमुखं स्मृतम्।। भ्रूमध्यान्तं लिङ्गकण्ठो मस्तको लिङ्गमस्तकः।।" इति वाक्यात् तत्तच्छरीरस्याऽपि मन्त्रलिङ्गरूपत्वं सिद्धम्, तथापि यावच्छरीराधिवासस्तावत् क्रियाज्ञानसमुच्चयेनोपासनाविधानात् शरीरवियोगपर्यन्तं लिङ्गाङ्गसामरस्याचरणमव्याहतमेवेति मन्तव्यम् ।।९।।

एवं पृथिव्या भक्ताङ्गत्वात् सा तत्रैव लीना भवति, चिद्धृतिरूपत्वात्। अपां माहेश्वराङ्गत्वात् तास्तत्रैव लीना भवन्ति, चिदाप्यायनरूपत्वात्। तेजसः प्रसाद्यङ्गत्वात् तत्तत्रैव लीनं भवति, चिदुज्वलनरूपत्वात्। वायोः प्राणलिङ्ग्यङ्गत्वात् स तत्रैव लीनो भवति, स्वतन्त्रतालक्षणस्पन्दनरूपत्वात्। व्योम्नः शरणाङ्गत्वात् तत्तत्रैव लीनं भवति, चिद्व्याप्तिरूपत्वात्। वेद्यसंस्कारविशिष्टबिन्दुरूपमनस ऐक्याङ्गत्वात् तत्तत्रैव लीनं भवति, चिदानन्दरूपत्वात्।

एवं रीत्या भक्तस्याचारलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, गन्धपदार्थानुसन्धान-सम्बन्धित्वात्। माहेश्वरस्य गुरुलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, रसपदार्थानुसन्धान-सम्बन्धित्वात्। प्रसादिनः शिवलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, रूपपदार्थानुसन्धान-सम्बन्धित्वात्। प्राणलिङ्गिनो जङ्गमलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, स्पर्श-पदार्थानुसन्धानसम्बन्धित्वात्। शरणस्य प्रसादलिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, शब्दपदार्थानुसन्धानसम्बन्धित्वात्। ऐक्यस्य महालिङ्गाङ्गत्वात् स तत्रैव लीनो भवति, सर्वपदार्थानुसन्धानसम्बन्धित्वात्।

एवं आचारलिङ्गं गुरुलिङ्गे लीनं भवति, इष्टलिङ्गसम्बन्धित्वात्। गुरुलिङ्गं शिवलिङ्गे लीनं भवति, इष्टप्राणसम्बन्धित्वात्। शिवलिङ्गं जङ्गमलिङ्गे लीनं भवति, प्राणलिङ्गसम्बन्धित्वात्। जङ्गमलिङ्गं प्रसादलिङ्गे लीनं भवति, प्राणभावसम्बन्धित्वात्।

प्रसादलिङ्गं महालिङ्गे लीनं भवति, भावलिङ्गसम्बन्धित्वात्। महालिङ्गं घनलिङ्गैक्यलोलीभूतं भवति, सच्चिदानन्दस्वरूपत्वात्। एवं पिण्डादिज्ञानशून्यान्तैकोत्तरशतस्थलानां क्रमोऽप्यनुसन्धनेयः। स **चास्मत्कृतशिवानुभवसिद्धान्ते** विस्तरेण प्रतिपादित इत्यत्रैव विरम्यते।

।। इति शिवाद्वैतविवेकः।।

***।। इति तृतीयः परिच्छेदः ।।***



## चतुर्थः परिच्छेदः

एवं पूर्वोक्तदिशा तत्त्वमस्यादिमहावाक्यार्थशोधनमपि सिद्धं भवति। तथा हि— नामरूपविभागार्हसूक्ष्मचिदचिद्रूपशक्तिस्तद्विशिष्टं सर्वज्ञत्वादिधर्मविशिष्टं चैतन्यं नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यं चैतत्त्रयमहिकुण्डलवदेकत्वेन प्रतीयमानं सत् तत्पदवाच्यार्थो भवति। नामरूपविभागार्हसूक्ष्मचिदचिद्रूपशक्तितद्विशिष्ट-सर्वज्ञत्वादिधर्मिकचैतन्ययोराधारभूतं यन्नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यं तत्तत्पदलक्ष्यार्थो भवति। एवं स्थूलचिदचिद्रूपशक्तिस्तद्विशिष्टं किञ्चि-ज्ज्ञत्वादिधर्मिकचैतन्यं नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यं चैतत् त्रयं त्वंपदवाच्यार्थो भवति। स्थूलचिदचिद्रूपशक्तितद्विशिष्टकिञ्चिज्ज्ञत्वादिधर्मिक-चैतन्ययोराधारभूतं यन्नामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यं तत् त्वंपदलक्ष्यार्थो भवति।

इदं तत्त्वमसीति महावाक्यं शिवजीवयोर्विरुद्धधर्मविशिष्टयोः साक्षादैक्यप्रति-पादकत्वाभावेऽपि लक्षणया सम्बन्धत्रयेणैकार्थं प्रतिपादयति। सम्बन्धत्रयं च पदयोः सामानाधिकरण्यम्, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मतद्धर्मयोर्लक्ष्यलक्षणभावश्चेति। तत्र पदयोः सामानाधिकरण्यं च [१]भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकस्मिन्नर्थे वृत्तिः। तच्च सोऽयं देवदत्त इत्यस्मिन् वाक्ये तत्कालतद्देशवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम्, एतत्कालैतद्देशवैशिष्ट्यमयंपदप्रवृत्तिनिमित्तम्। तथा च भिन्नप्रवृत्तिनिमित्तयोः सोऽयं पदयोरेकस्मिन् देवदत्तपिण्डे तात्पर्यसम्बन्धः। तद्वत् तत्त्वमसीति वाक्येऽपि सूक्ष्मचिदचिद्रूपशक्तिवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम्, स्थूलचिदचिद्रूपशक्तिवैशिष्ट्यं त्वंपदप्रवृत्तिनिमित्तम्। तथा च भिन्नप्रवृत्तिनिमित्तयोस्तत्त्वंपदयोरेकस्मिन्नामरूप-विभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टे शुद्धचैतन्ये तात्पर्यसम्बन्धः सामानाधि-करण्यमिति।।१।।

---

१. प्रवृत्तिनिमित्तं शक्यतावच्छेदकमित्यर्थः ।

[१]पदार्थयोर्व्यावर्तकव्यावर्त्यभावसम्बन्धो विशेषणविशेष्यभावसम्बन्धः। स च सोऽयं देवदत्त इत्यत्रायंपदवाच्यः, सोऽसावेतत्कालैतद्देशविशिष्टो देवदत्तपिण्डोऽयं स इति तच्छब्दवाच्यात् तत्कालतद्देशविशिष्टाद् देवदत्तपिण्डाद् भिन्नो नेति यदा प्रतीयते, तदा तच्छब्दार्थस्याऽयंपदवाच्यार्थनिष्ठभेदव्यावर्तकतया विशेषणम्, अयंपदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। तथा स इति तत्पदवाच्यस्तत्कालतद्देशविशिष्टो देवदत्तपिण्डः सोऽयमित्ययंपदवाच्यादेतत्कालैतद्देशविशिष्टादस्माद्-देवदत्तपिण्डाद् भिन्नो नेति यदा प्रतीयते, तदाऽयंशब्दवाच्यस्य तत्पदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, तत्पदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। तथा चायमेव सः, स एवायं इत्यन्योन्यभेदव्यावर्तकतया सोऽयंपदार्थयोः परस्परं विशेषणविशेष्यभावः। तद्वदत्रापि तत्त्वमसीति महावाक्ये यत्त्वंपदवाच्यं स्थूलचिदचिद्रूपशक्तिविशिष्टं चैतन्यम् तत् तत्पदवाच्यात् सूक्ष्मचिदचिद्रूपशक्तिविशिष्टचैतन्याद् भिन्नं नेति यदा प्रतीयते, तदा तत्पदार्थस्य त्वंपदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, त्वंपदार्थस्य व्यावर्त्यत्वाद् विशेष्यत्वम्। तथा तत्पदवाच्यं यत् सूक्ष्मचिदचिद्रूपशक्तिविशिष्टं चैतन्यम्, तत् त्वंपदवाच्यात् स्थूलचिदचिद्रूपशक्तिविशिष्टचैतन्यद् भिन्नं नेति यदा प्रतीयते, तदा त्वंपदार्थस्य तत्पदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वम्, तत्पदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम्। तथा च त्वं तदसि, तत्त्वमसि इति तत्त्वंपदार्थयोः परस्परं भेदव्यावर्तकतया विशेषणविशेष्यभावसम्बन्धोऽवगन्तव्यः।।२।।

लक्ष्यलक्षणभावसम्बन्धस्तु प्रत्यगात्मतद्गतधर्मयोर्लक्ष्यलक्षणभावसम्बन्धः। असाधारणधर्मप्रतिपादकं वाक्यं लक्षणवाक्यम्,तत्प्रतिपाद्यमवशिष्टं लक्ष्यम्। तथा च सोऽयं देवदत्त इत्यस्मिन् वाक्ये सोऽयंपदयोस्तदर्थयोर्वा विरुद्धतत्कालतद्देश-विशिष्टत्वैतत्कालैतद्देशविशिष्टत्वयोः परित्यागेनाविरुद्धदेवदत्तत्वविशिष्टदेवदत्तपिण्डेन सह देवदत्तत्वविशिष्टदेवदत्तवाचकशब्दस्य लक्ष्यलक्षणभावसम्बन्धः। तद्वत् तत्त्वमसीति महावाक्ये तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धसूक्ष्मस्थूलचिदचिद्रूपशक्तिविशिष्टत्वपरित्यागेन तत्त्वंपदाभ्यां लक्ष्याविरुद्धनामरूपविभागानर्हसूक्ष्मचिदचिद्रूपशक्तिविशिष्टचैतन्येन सह तत्त्वंपदयोर्लक्ष्यलक्षणभावसम्बन्धः। [२]इयमेव भागलक्षणेत्युच्यते। अत्र तत्त्वंपदयोस्तदर्थयोश्च त्यक्तविरुद्धांशयोर्लक्षणत्वम्, अखण्डपरशिवचैतन्यस्य लक्ष्यत्वमिति मन्तव्यम्।।३।।

---

१. व्यावर्तकं विशेषणं व्यवच्छेदकमिति यावत्, व्यावर्त्यं विशेष्यं व्यवच्छेद्यमिति भावः तयोर्भावो विशेषणविशेष्यभावः। स एव सम्बन्धः, सम्बन्धवदुभयनिरूपणीयत्वादित्यभिप्रायेण विशेषणविशेष्यभावसम्बन्धं सदृष्टान्तमाह — **स चेति**।

२. ''तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा'' इत्यभिप्रायेणाह — **इयमेवेति**।

तत्राभिधेयाविनाभूतप्रवृत्तिर्लक्षणा[१]। सा च त्रिधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे वृत्तिर्जहल्लक्षणा। सा च गङ्गायां घोष इति वाक्यवदत्र न सङ्गच्छते। तत्र तु गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद् वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरे तीरे लक्षणाया युक्तत्वात् जहल्लक्षणा सङ्गच्छते, अत्र तु सूक्ष्मस्थूलप्रपञ्चाकारशक्ति-विशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद् भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न सङ्गच्छते।।४।।

वाच्यार्थपरित्यागेन तत्सम्बन्धिनिवृत्तिरजहल्लक्षणा। साऽपि "शोणो धावति" इत्यादिवाक्यवदत्र न सङ्गच्छते। तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सङ्गच्छते। अत्र तु सूक्ष्मस्थूलप्रपञ्चाकारशक्तिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवाद-जहल्लक्षणा न सङ्गच्छते। तस्माज्जहदजहल्लक्षणयैव महावाक्यार्थबोध इति। तथा च **गुरुचरणैः**—"[२]एकात्मकत्वाज्जहती न सम्भवेत् तथाऽजहल्लक्षणता विरोधतः। सोऽयं पदार्थाविव भागलक्षणा युज्येत तत्त्वंपदयोरदोषतः।।" इति महावाक्यार्थबोधने जहदजहल्लक्षणैव स्वीकृता।।५।।

तत्र वाच्यार्थैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा। सा च यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालादिविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद् विरुद्धतत्कालैतत्कालादिविशिष्टांशं परित्यज्याविरुद्धदेवदत्तांशमात्रं लक्षयति, तथा तत्त्वमसीति वाक्यं तदर्थो वा सूक्ष्मस्थूलप्रपञ्चाकारशक्तिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थांशे विरोधात् विरुद्धसूक्ष्मस्थूलांशं परित्यज्याविरुद्धनामरूपविभागानर्हसूक्ष्म-चिदचिद्रूपशक्तिविशिष्टं शुद्धचैतन्यमात्रं लक्षयति। तथा चोक्तम्—"तत्पदेनोच्यते लिङ्गं त्वंपदेनाङ्गमीरितम्। अनयोरैक्यभावोऽयं सम्बन्धोऽसिपदेन च।। इति वाक्यानुसन्धानं भासते यस्य सन्ततम्। गुरूपदेशाल्लिङ्गाङ्गसम्बन्धीति स उच्यते।। एवं लिङ्गाङ्गसम्बन्धभावना यस्य विद्यते। स योगी स च सर्वज्ञो जीवन्मुक्तः स उच्यते।। लिङ्गाङ्गपदवाच्यार्थं हित्वा सम्यग्धिया पुनः। लक्ष्यार्थं लक्ष्ययित्वा तं सोऽहमेवेति

---

१. "मानान्तरविरोधेन मुख्यार्थस्यापरिग्रहे। मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते।।" इति शक्यार्थसम्बन्धस्यैव लक्षणात्वमिति भावः।

२. **शिवाद्वैतसुधाकरे** ।

चिन्तयेत्।। लिङ्गाङ्गपदसम्भूतसम्यग्धीजन्ममात्रतः। अविद्यासहकारेण नाभूदस्ति भविष्यति।।" इति।।६।।

न चेदं तत्त्वमसीति वाक्यं "त्वमिन्द्रोऽसि" इतिवत् स्तुतिपरम्, नवकृत्वोऽभ्यासवैयर्थ्यप्रसङ्गात्। नहि स्तुतिः पुनः पुनः परिचोदनापूर्वकं क्वचिदभ्यस्यते। अत एव नार्थवादोऽनन्यशेषत्वात्। नह्यस्मिन् प्रकरणेऽन्यत् किञ्चित्प्रधानवाक्यमुपलभ्यते, यच्छेषत्वेनेदमर्थवादरूपं भवेत्। नापि राजपुरुषे "राजाऽयम्" इतिवत्, औपचारिक-प्रमितभेदयोरैक्यस्यौपचारिकत्वानुपपत्तेः। नापि विपर्ययः संशयो वात्र सम्भवति, श्रुतेः स्वतःप्रामाण्यात्। तस्मात् तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठम्, अकार्यकारण-द्रव्यमात्रनिष्ठत्वे सति समानाधिकरणवाक्यत्वात् सोऽयं, देवदत्त इति वाक्यवत्। तदेवं पदयोरखण्डार्थनिष्ठत्वेन सामानाधिकरण्यं वाच्यार्थांशे विरोधाद् विना लक्षणां न सङ्गच्छते। तथा चोक्तम्—"तत्त्वंपदार्थे लिङ्गाङ्गरूपेऽन्योन्यविरुद्धकम्। उपाधिकृतवाच्यार्थं त्यक्त्वा सच्चित्सुखात्मकम्।। लक्ष्यार्थमविरुद्धं यच्छिवं तदिति या मतिः। सा सम्बन्ध इति प्रोक्ता वेदान्तागमवेदिभिः।।" इति।।७।।

[१]अहंब्रह्मास्मीत्यत्र पूर्वोक्ततत्त्वमसीति महावाक्यगतत्वंपदगृहीतस्थूलचिद-चिद्रूपशक्तिविशिष्टो जीवोऽहंपदेनोच्यते। तथा तत्पदगृहीतसूक्ष्मचिदचिद्रूपशक्तिविशिष्टः परशिवो ब्रह्मपदेनोच्यते। एवमसिपदोक्तं तयोरैक्यमेवात्रास्मिपदेनोच्यते। तथा च परोक्षावबोधिततत्त्वमसीति महावाक्यार्थ एवापरोक्षेणाहं ब्रह्मास्मीत्यखण्डवाक्येनानुभूयत[२] इति। तदुक्तम्—"लिङ्गरूपो महादेवः सच्चिदानन्दलक्षणः। अङ्गरूपो हि जीवात्मा भवभावनियन्त्रितः।। तत्पदेनोच्यते सद्भिर्लिङ्गरूपः सदाशिवः। त्वंपदेनाङ्गरूपो हि जीवः संसारलक्षणः।। त्वमर्थोऽङ्गस्वरूपो यः सोऽहंशब्दार्थ एव हि। त्वमहंपदलक्ष्यार्थश्चिद्रूपः परमेश्वरः।। त्वमहंपदवाच्यार्थस्यैव देहादिवस्तुनः। न तच्छब्दार्थतश्चैव विरुद्धत्वात् सदैव हि।। त्वमहंपदलक्ष्यार्थो जीवात्मा चाङ्गरूपकः। अशिवश्चेत् सदानन्दस्ततो नैव विलोकयेत्।।" इति। वस्तुतो लक्ष्यार्थमादाय तत्त्वमसीति

---

१. घनलिङ्गापरनामकपरशिवचैतन्यप्रतिपादकस्य तत्त्वमसीति वाक्यस्यार्थं सप्रपञ्चमभिधायेदानीं यजुर्वेदानुभववाक्यार्थो वर्ण्यते—"**अहं ब्रह्मास्मि**" इति।

२. श्रीगुरुमुखात्त्रवकृत्त्वस्तत्त्वमस्यादिवाक्यश्रवणाद् देहाद्यहङ्कारान्तजडपदार्थसकलदृश्यविलक्षण-प्रत्यगात्मनः शुद्धेन परशिवेन सहैकत्वबोधानन्तरं कश्चिदधिकारी लब्धावसरं सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दैकरसमनुभवेन जिज्ञासुराचार्योपदिष्टम्—"अहं ब्रह्मास्मि" इति वाक्यार्थमनुस्मरन् घनलिङ्गैक्यरूपं स्वात्मानन्दमनुभवतीत्यर्थः।

महावाक्येन परोक्षावबोधितलिङ्गाङ्गसामरस्यमेवाहंब्रह्मास्मीत्यखण्डवाक्येन लक्ष्यार्थतयाऽपरोक्षेणानुभवन् परमानन्दस्वरूपः शिवोऽहमिति भावनया जीवन्मुक्तो भवतीति। तदुक्तम्—"एवं लिङ्गाङ्गसम्बन्धभावना यस्य विद्यते। स योगी स च सर्वज्ञो जीवन्मुक्तः स उच्यते।।"इति।।८।।

अत्र यद्यपि अहमादिपदानामन्तर्यामिणि स्वात्मवृत्तिभ्यामेव प्रवृत्तिनिमित्तप्रयोगोपाधिभ्यां वृत्तावपि तयोस्तस्मिन् परम्परासम्बन्धघटकस्वात्मशिवसम्बन्धरूपतया स्वात्मशिवयोर्नियम्यनियामकभावस्याऽप्यन्तर्यामिपर्यन्तेभ्योऽहमादिपदेभ्यः प्रतीतिर्भवत्येव, अतोऽहमादिपदानां प्रपन्नप्रयुक्तानामन्तर्यामिणि परशिवे शक्तिसत्त्वे बाधकाभावाल्लक्षणाऽयुक्ता, [१]तथापि सर्वात्मकस्य परशिवस्य तादात्म्येन चिदचिद्रूपशक्त्यात्मकं सर्वं जगदभिमानविषयम्। जीवानां तु चिद्रूपाणां स्थूलचिदचिद्रूपशक्त्यात्मकं तत्तच्छरीरमात्रमभिमानविषयमित्यभिमानविषयीभूततत्तदुपाधिपरित्यागपूर्वकलक्ष्यार्थमादाय महावाक्यार्थबोधः शिष्याणां सुबोधार्थ एवेति मन्तव्यम्।।९।।

---

१. परशिवस्य जीवान्तर्यामितया जीवानां च तच्छरीरतया "अहं मनुष्यः", "अहं देवः" इति, "गौरोऽहम्", "स्थूलोऽहम्" इत्यादिवदहमादिशब्दानामन्तर्यामिणि शक्तिः सिद्ध्यतीति जीवब्रह्मणोरभेद एव प्रतीयते, तर्हि किमर्थं वाच्यार्थपरित्यागेन लक्ष्यार्थमादायाभेद उपपाद्यते? किमर्थं च जीवब्रह्मणोः स्वरूपत एव भेदसिद्धौ स्थूलसूक्ष्मचिदचिद्रूपशक्तिद्वयं तयोर्भेदोपपादनाय परिगृह्यते? इत्याशङ्क्य परिहरति—**तथापीति**। तथा च सच्चिदानन्दस्वरूपस्य सर्वशक्तिमतः सर्वज्ञस्य परशिवस्य चेतनाचेतनात्मकं सर्वं जगत् तादात्म्येनाभिमानविषयीभूतमिति परशिवः सर्वात्मक इत्युच्यते। जीवानां तु चिद्रूपाणामेव स्थूलचिदचिद्रूपशक्त्यात्मकं तत्तच्छरीरमात्रं तादात्म्येनाभिमानविषयीभूतमिति जीवास्तत्तच्छरीरात्मकाः पृथक्पृथग् भेदवन्त इत्युच्यन्ते। परशिवस्य सर्वाभिमानित्वात् सर्वशक्तिविशिष्टत्वाच्च सर्वमेव जगत् स यथेच्छति तथा कर्तुं शक्नोति। तथा चोक्तं गीतायाम्—"सर्वतः पाणिपादं च सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।।" इति, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।" इति च। जीवानां तु स्वस्वशरीराभिमानित्वादल्पशक्तिविशिष्टत्वाच्च स्वेच्छाप्रयत्नाभ्यां स्वस्वशरीरमात्रचेष्टने शक्तिर्भवति, असति बाधके, अतः सर्वमेतदुपाधिकृतमित्युपाधिपरित्यागेन शुद्धचैतन्यरूपपरशिवस्वरूपमेव निजस्वरूपं भवतीति शिष्याणां सुबोधार्थमेव वाच्यार्थपरित्यागपूर्वकलक्ष्यार्थमादाय महावाक्यार्थवर्णनं कृतमिति। अस्मिन् सिद्धान्ते उपाधीनां नाद्वैतसिद्धान्तोक्तमिथ्यात्वम्, किन्तु कार्यावस्थापन्नस्य कारणरूपतयावस्थानत्वरूपानित्यत्वमिति बोध्यम् ।

"[१]प्रज्ञानं ब्रह्म" इत्यत्र प्रज्ञानपदेन "येन[२] वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्राति" इत्यादिना तत्तदिन्द्रियमुखेन तत्तत्पदार्थानुसन्धातृरूपषड्विध-लिङ्गात्मकत्वमुपवर्ण्य "[३]यदेतद् हृदयं" इत्यारभ्य "सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति" इत्यन्तेन षड्विधलिङ्गसमष्टिरूपं भावलिङ्गं प्रतिपादितम्। ब्रह्मपदेन—"[४]एष ब्रह्मैष इन्द्रः" इत्यारभ्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितम्" इत्यन्तेन समस्तचेतनाचेतनात्मकजगतस्तद्रूपत्वं प्रतिपाद्य पुनः "प्रज्ञा प्रतिष्ठा" इत्यनेन तन्निष्ठासाधारणधर्मरूपां सूक्ष्मचिदचिद्रूपशक्तिस्वरूपां प्रज्ञाशक्तिं उपवर्ण्य "प्रज्ञानं ब्रह्म" इत्यनेन परशिवतत्त्वं प्रतिपादितम्। तदुक्तम्—"[५]यदिन्द्रियमुखेनेदं शृणोति व्याकरोति च। ईक्षते रसते चैवं जिघ्रतीदं स्वभावतः।। तत्परं भावलिङ्गाख्यं प्रज्ञानेन प्रकीर्तितम्। यद्विष्णुमुख्यदेवेषु मनुष्यपशुपक्षिषु।। चैतन्यमेकं तद् ब्रह्म तल्लिङ्गं चित्सुखात्मकम्।।" इति। तस्माद्भावलिङ्गरूपमेव षट्स्थलात्मकं परब्रह्मेति वाक्यार्थबोधः।।१०।।

"[६]अयमात्मा ब्रह्म" इत्यत्रायमात्मपदाभ्यामङ्गुलिना निर्दिश्यमानायंपदवाच्यो जाग्रत्स्वप्नसुषुप्त्यात्मकावस्थात्रयनिबन्धस्थूलसूक्ष्मकारणशरीरावच्छिन्नत्यागाङ्गभोगाङ्गयोगाङ्गापरनामको जीव उच्यते। ब्रह्मपदेनावस्थात्रयविरहितं यत्तुरीयावस्थाप्रपन्नं शरीरत्रयानवच्छिन्नमिष्टलिङ्ग-प्राणलिङ्गभावलिङ्गसमष्टिरूपं घनलिङ्गात्मकपरशिवतत्त्वमुच्यते। तथा च **माण्डूक्योप-निषदि**—"ॐ [७]इत्येतदक्षरमिदम्" इत्यारभ्य "अयमात्मा ब्रह्म सोयऽमात्मा चतुष्पात्" इत्यन्तेन मूलप्रणवरूपेण ब्रह्मस्वरूपप्रतिपादनद्वाराऽयंपदविशेषितजीवात्मनो ब्रह्मगतचतुर्विधरूपान्तर्गतत्वं सामान्येन प्रदर्श्य तदेव पुनः "जागरितस्थानो बहिष्प्रज्ञः" इत्यारभ्य "आनन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः" इत्यन्तेन जाग्रदाद्यवस्थात्रय-निबन्धनशरीरत्रयावच्छिन्नत्वेन त्रैविध्यमुपवर्ण्य "एष सर्वेश्वर एष सर्वज्ञः" इत्यारभ्य "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्यन्तेनास्य

---

१. ऐतरेयोपनिषदि, ३.३

२. ऐतरेयोपनिषदि, ३.१

३. ऐतरेयोपनिषदि, ३.२

४. ऐतरेयोपनिषदि, ३.३

५. **शिवाद्वैतसुधाकरे** ।

६. माण्डूक्योपनिषदि, ३

७. माण्डूक्योपनिषदि, ३

तुरीयावस्थाप्रपन्नशरीरत्रयानवच्छिन्नघनलिङ्गरूपषट्स्थलात्मकपरशिवतत्त्वस्वरूपत्वं प्रतिपादितम्। तदुक्तं [१]**गुरुचरणैः**—"[२]शरीरत्रयसम्बन्धादवस्थात्रयसंयुतः। अङ्गवाच्यो हि जीवात्मा अयमात्मेति कथ्यते।। शरीररहितः साक्षादवस्थात्रयवर्जितः। तुरीयो लिङ्गवाच्यो हि शिवो ब्रह्मेति कथ्यते।। तस्माल्लक्षणया जीवो शिव एव न संशयः। इति निश्चित्य मनसा शिवोऽहमिति चिन्तया।। शिवजीवैक्यरूपेण परमानन्दमाप्नुयात्।" इति।

तस्मात् समस्तश्रुत्यागमस्मृतीतिहासपुराणप्रसिद्धाष्टावरणपञ्चाचारविशिष्टतयाऽशेष-विश्वाभेदमयपूर्णाहंविमर्शनात्मकलिङ्गाङ्गसामरस्यरहस्यप्रतिपादके शिवशक्तिजीवेति-त्रिपदार्थ-सामरस्यनिधानभूते ज्ञानक्रियायोगचर्यापादप्रतिपादके **कामिकादिवातुलान्ताष्टाविंशति-दिव्यागमसारसर्वस्वे** शक्तिविशिष्टाद्वैतापरवाचके शिवाद्वैतसिद्धान्त एव महावाक्यानां समन्वय इति सर्वं समञ्जसम्।।

।। इति महावाक्यार्थविवेकः।।

*।। इति चतुर्थः परिच्छेदः।।*

शिवभक्तिशिवाचारशिवार्चासक्तचेतसाम्।
स्वस्वरूपावबोधार्थं दर्पणो रचितो मया ।।

*इति श्रीपरमहंसपरिव्राजकाचार्यवर्य-सर्वतन्त्रस्वतन्त्र-पदवाक्यप्रमाणपारावारपारीण-परशिवापरावतार-पूवल्लीपुरवराधीश्वरश्रीमद्भगवत्पादश्रीनीलकण्ठशिवाचार्य-प्रतिष्ठापितश्रीशिवाद्वैतभाष्यसिंहासनाधीशपूवल्लीपञ्चवर्णमहामठाधिष्ठित-श्रीभगवत्पादचिद्घनशिवाचार्यकरकञ्जातसञ्जातश्रीमच्छक्तिविशिष्टाद्वैत-सिद्धान्तपयःपारावारराकासुधाकरश्रीशिवानुभवशिवाचार्य-विरचितः श्रीशिवाद्वैतदर्पणः सम्पूर्णः।।*

।। सर्वं शिवार्पणमस्तु ।।



---

१. श्रीचिद्धनगुरुभिरित्यर्थः ।

२. **शिवाद्वैतसुधाकरे** ।

# ग्रन्थग्रन्थकार-नामानुक्रमणी





# शिवाद्वैतदर्पणव्याख्या

## प्रतिबिम्बाख्या

*व्याख्याकार:*

**स्व. प्रो. डॉ. श्रीदेवस्वरूपमिश्र:**

वेदान्ताविभागाध्यक्षचर:

दर्शनसंकायाध्यक्षचर:

पूर्वकुलपतिश्च

सम्पूर्णानन्द संस्कृत विश्वविद्यालय

वाराणसी

# याथार्थ्यप्रकाशनम्

मुनित्वञ्च (यतित्वञ्च) निरन्तराद्वितीयशुद्धबुद्धमुक्तस्वभावसच्चित्परमात्मविषयकाव्यवधानलग्ननिरवच्छिन्ननीरन्ध्रनिर्यातमणिमयूखवद्धारावाहिकप्रमाणजन्यवृत्त्यवच्छिन्नचैतन्यप्रतियोगिकतादात्म्यानुयोगित्वम्, स्वामित्वञ्च समस्तैश्वर्ययुक्तत्वे सति अध्यात्मसाम्राज्यसिंहासनस्थत्वम्। तादृशाश्च सन्ति किलोदारचरिताः प्रसन्नाननाः —

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ।।

इति दुर्लभलक्षणोपेता बालब्रह्मचारिणो ब्रह्मचारिणो विश्वाराध्याः काशीस्थज्ञानसिंहासनाधीश्वरा वीरा धीराश्च १००८ श्रीमच्चन्द्रशेखरशिवाचार्यमहास्वामिनः।

एते च यथार्थज्ञानवत्त्वलक्षणधीरत्वाधाराः काले प्रयुक्तत्वलक्षणवीराश्च। पुत्रत्वं शिष्यत्वञ्चैकरूपमेव शास्त्रविदः प्राहुः। तथा हि —

सदाचार्यस्य नैवास्ति विशेषः सुतशिष्ययोः ।
सच्छिष्यस्यापि नैवास्ति जनकाचार्ययोस्तथा ।। इति।

पूर्वपीठाधीश्वरादिमेधिकाः। कथमिति चेत्तर्हि पश्यन्तु—धार्मिकत्वप्रयुक्तोत्कृष्टत्वप्रकारकनानादिग्देशीयलोकसमवेतज्ञानविषयत्वलक्षणविलक्षणदिव्यगुणान्वितत्वे सति स्फुरद्द्वैतविभ्रान्तिसन्तानसन्तप्तवन्दारुसंसारनिद्रापहारकत्वात्, तत्त्वज्ञाननिदाघनिपीतसलिलतया सलीलयाद्वितीयपरमात्मसाक्षात्कारहेतुभूतदानशीलत्वपञ्चशीलत्वादिदुर्लभधर्मधर्मिकत्वात्।

यथोद्वेलं जलधिरतिबहलचपलकल्लोलमालास्फारितपुञ्जस्तबकतया विकृतो मध्ये' प्रशान्तकल्लोलोपसर्गः पौतिकः पोतेनाप्नोति जीवस्तु ब्रह्मैव केन किं प्राप्यतां भेदाश्रयत्वात्राप्तेरिति शास्त्रनिर्दिष्टपरमात्मविद्यामृताञ्जनेनाञ्ज सैवोत्पथात्पथि समवस्थापयन्ति सततमिमे महास्वामिन इति ममानुभवः।

एते च ज्ञाननिष्ठा ब्रह्मनिष्ठाः परमब्रह्मण्या भगवन्मर्यादापुरुषोत्तमराघवेन्द्रस्य कोटिकोटिब्रह्माण्डनायकस्यौपम्यं समलङ्कुर्वाणा 'पूजयिता स ब्राह्मणानाम्' इत्युक्त्या

ब्राह्मणपूजने सम्मानने सदैव समुद्यता सहृदया दयालव: परदु:खप्रहाणेच्छारूपाया साधारणजनालभ्याया दयाया सिन्धव:, परदु:खप्रतियोगिकध्वंसानुगुणक्रियानिष्पादकत्व-लक्षणकृपावन्तस्तत्रभवन्तो भवन्तो भव्या ज्ञानपीठाधीश्वरा अद्वैतसिंहासनलब्धदीक्षा: श्रोत्रियब्रह्मनिष्ठा: समक्षसमागतजनमनस्समाकर्षणरूपतेजोऽन्विता ज्ञानरूपकुलविद्या-प्रभृतिप्राकृतजनानाप्तगुणप्रयोज्यपरावहेलनादिव्यापारशून्या लोकमान्या वदान्या विराजन्तेतमां काश्यामित्यहो देशस्य प्रान्तस्य ज्ञाननगर्या अस्या काश्याश्च सौभाग्यम्।

*ॐ शान्ति: शान्ति: शान्ति:।*



# शिवाद्वैतदर्पणः

## पण्डितश्रीदेवस्वरूपमिश्रविरचित-
## प्रतिबिम्बव्याख्यायुतः

### प्रथमः परिच्छेदः

विश्वेश्वरं प्रणम्यादौ मातरमन्नपूर्णकाम् ।
गुरुं श्रीरघुनाथञ्च प्रतिबिम्बं करोम्यहम् ।।१।।

श्रीचन्द्रशेखरयतीन्द्रतपःप्रभावात्
तदाप्तवाक्यात्परिप्रेरितोद्यतः ।
काश्यामवस्थाय करोमि व्याख्यां
प्रकर्षबिम्बां प्रतिबिम्बनाम्नीम् ।।२।।

गयाप्रसादतनुजो जानकीगर्भसम्भवः ।
देवस्वरूपमिश्रोऽहं कुर्वे व्याख्यामतन्द्रितः ।।३।।

शिवानुभवसम्भूतं श्रीशिवाद्वैतदर्पणम् ।
व्याख्यातुमिदमित्थं वै कुर्वे यत्नं यथामति ।।४।।

रघुनाथस्य शिष्येण चन्द्रशेखरसत्कृतः ।
करोमि व्याख्यां यत्नेन हेतुरत्र प्रभुः शिवः ।।५।।

यतिना ब्रह्ममतिना बालकृष्णेन स्वामिना।
योजितो ह्याशिषा नूनं हथियारामके मठे ।।६।।

अथ व्याख्यानाम मूलग्रन्थविषयविवेचनवाक्यकदम्बरूपा। अवसरश्च तस्या अप्रतिपत्तेरतिप्रतिपत्तेश्च। तथा च प्रोक्तं रामरुद्रभट्टाचार्यैर्मुक्तावलीव्याख्यादिनकरीव्याख्यान-भूतायां रामरुद्र्याम् 'अप्रतिपत्तेरतिप्रतिपत्तेर्वा व्याख्यानं कुर्वन्ति सन्तः' इति। यथा हि विरक्ता अपि शङ्कराचार्यरामानुजाचार्यमध्ववल्लभरामानन्दबलदेवनीलकण्ठश्रीपति-

पण्डितताराध्यप्रभृतय आचार्या लोकानुग्रहकाङ्क्षया स्वकल्याणसाधकसाधनानुष्ठानानुध्यानानुभवप्रसूतमर्थजातं प्रकटयितुं व्याससूत्रप्रणयनवत्तत्सूत्रेषु भाष्याणि भाषितवन्तस्तथैव तद्वचसामपि रहस्योद्घाटनरूपं प्रयोजनमालक्ष्य व्याख्यानानि जातानि भामतीश्रुतप्रकाशिकादीनि, तथैवात्र कर्मणि ममापि प्रयासो मन्तव्यः।

तत्र श्रीशिवाद्वैतदर्पणकृद्भिराचार्यैः श्रीभगवत्पादशिवानुभवशिवाचार्यैरस्य ग्रन्थरत्नस्य निर्विघ्नं समाप्तिः पूर्णता चरमवर्णोच्चारणतदवबोधकवर्णलेखनादिकार्यं सम्पन्नं भवेदिति धिया ग्रन्थादौ विघ्नेश्वरो भगवान् श्रीगणेशः स्मृतः। इदमेव मङ्गलाचरणम्। न तु मङ्गलम्। अगर्हिताभीष्टार्थसिद्धेरेव मङ्गलत्वात्। अत एव लोके प्रोच्यते कस्यचिद् गृहे विवाहादिसमुत्सवेऽस्य मङ्गलं जातमिति। मङ्गलस्य निर्दुष्टं लक्षणन्त्विष्टस्मरणरूपम्। विवाहादौ मङ्गलकार्ये समारोपान्मङ्गलशब्दव्यवहार इति विवेक्तव्यम्। ग्रन्थादौ ग्रन्थान्ते ग्रन्थमध्ये च कात्स्न्येंनांशतो वा मङ्गलाचरणं कुर्वन्ति शिष्टाः। अगर्हिताभीष्टकार्यस्य सिद्धिर्निष्पन्नता येन भवति तदेव मङ्गलम्। कार्येऽपि लोके मङ्गलशब्देन व्यपदेशः क्रियत इति विवेक्तव्यम् ।

तत्र "सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः" इति प्रामाण्येन कार्यसामान्यं प्रति विघ्नात्यन्ताभावस्य कारणत्वाद् ग्रन्थादौ गणेशस्तुतिः क्रियते—ॐ नमः श्रीगणेशायेत्यादिना।

ननु श्रीगणेशस्य शिवसुतत्वादभ्यर्हितत्वात्तत्पितुः शिवस्यैवादौ स्तुतिः कर्त्तव्या? कथं व्युत्क्रमो विहितो यत्प्राथम्येन श्रीमतो भगवतो गणेशस्य स्मरणं ततः परं परमशिवः स्मृतः? नेदमुचितम्, पूज्यपूजाव्यतिक्रमस्यानिष्टापादकत्वात्,

अपूज्या यत्र पूज्यन्ते पूज्यानां च व्यतिक्रमः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् ।।

इत्युक्तेः। अत एव "न पङ्क्तिभेदो हि शिवाय कल्पते" इत्युक्तिः। शिवाय कल्याणाय न भवतीति तदर्थः। अत एव चाऽवीतिदोषपरिहाराय ज्येष्ठस्य भ्रातुरविवाहे कनिष्ठस्य प्रथमं नोद्वाहादिसंस्कारः। क्रमसम्भवे व्युत्क्रमस्यान्यायत्वाच्च। तदनुमोदने तदकरणे च निश्चिते सति तथाविधा क्रिया न दोषाय भवतीति शास्त्रनिर्णय इति तु कथा न प्रकृते समुपयुज्यते, ग्रन्थादौ शिवगणेशग्रन्थकर्तृगोष्ठी तथाविधशिवादेशप्रभृतिप्रक्रियायाः सम्भवाभावादप्रसिद्धकल्पनापत्तेश्च। अतः "अभ्यर्हितञ्च" इति पाणिनिसूत्रानुसारेणाभ्यर्हितवाचकशब्दप्रयोगस्य प्राथम्येन द्वन्द्वसमासादौ प्रयोगनियमकरणं

यदा, तदा मङ्गलावसरे कथं न तथा न्यायानुकार इति सुतरां जिज्ञासा समुदेति। शिष्टानां विपरीताचारो न केवलं तदिष्टमेव हन्ति, किन्तु "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायेनान्याभीष्टविनाशकत्वमप्यापद्येतेति चेन्न, यथाकृतस्यैव युक्ततरत्वेनादोषात् । तथा हि—यद्यपि भगवतः शिवस्य नमस्कारादिरूपं मङ्गलं प्रथमतः समाचरणीयम्, नहि तत्र किमपि वक्तव्यम्, किन्तु विघ्नव्यूहनिवृत्तिरूपस्य मङ्गलप्रयोजनस्य सिद्धये भगवान् श्रीगणेश एवाभ्यर्हितः, तत्कार्यस्य विशेषतस्तद्द्वारैव निर्वर्तनात्। अत एव ग्रन्थकारैः शिवानुभवशिवाचार्यैः—'प्रत्यूहव्यूहपाथोधिसेतवे' इति विशेषणमुपात्तम्।

अपि च, देवानामनादित्वात्कस्याभ्यर्हितत्वं कस्य नेति वक्तुमशक्यत्वादत एव भगवतः शिवस्याम्बया सहोद्वाहसंस्कारे श्रीगणेशपूजनोल्लेखनमपि सामञ्जस्यमुपयाति। अन्यथा शिवपुत्रस्य श्रीगणेशस्य स्वपितुः विवाहसमयेऽसत्त्वान्नामग्रहणस्याप्यशक्यत्वात्तत्र तत्पूजनादिविधानं तथाविधाचारव्यवहारश्च विरुध्येत। किञ्च, 'सिद्धे शब्दार्थसम्बन्धे' इति व्याकरणवार्त्तिकप्रामाण्यात्सिद्धशब्दार्थस्य नित्यत्वस्य शब्दार्थसम्बन्धनिष्ठस्योक्त-त्वादत्रापि तद्योगात् श्रीगणेशब्दवाच्यादीनां नित्यत्वान्नित्यत्वरूपमभ्यर्हितत्वं श्रीशिवे श्रीगणेशे च समानमिति 'ययोरेव समो दोषः परिहारस्तयोः समः' इति न्यायेन अशोकवनिकान्यायेन गणेशस्तवस्य प्राथम्येन कृतत्वं निर्दोषमेवेति मन्तव्यम्।

अशोकवनिकान्यायश्चेदृशः—दशाननेन रावणेन हृता सीता लङ्कायामशोकवने स्थापिता। तत्र यदि कैमर्थ्याकाङ्क्षा स्याद् यत्कथं सा अशोकवन एव स्थापिता न भवने? यदि भवने स्थापिता भवेत्तर्हि पुनरपि प्रश्नः कथं भवने जनसङ्कुले राक्षसीबहुले निवेशिता न निर्जने वने, वनत एव गृहीतत्वात्। अतस्तत्रोत्थिताया आकाङ्क्षाया उत्थाप्यायाश्चाविश्रामान्नैवं तर्कः स्वीक्रियते, अनादिवस्तुनोऽन्योन्याश्रय-दोषस्यास्वीकारवत्। तथैव प्रकृतेऽपि श्रीगणेशस्यैव नमस्काररूपं मङ्गलं कथं कृतं न कृतं पूर्वं भगवतः शिवस्य? तत्पितृत्वेनाभ्यर्हितत्वात्, यदि च शिवस्य वन्दना प्रथमतः कृता भवेत्तदापि प्रश्नः स्यात्कथमादौ शिवस्य न श्रीगणेशस्य तस्य सर्वकर्मादौ वन्दनीयत्वाद् विघ्नेश्वरत्वाच्चेति। अतोऽत्राशोकवनिकान्यायेनापि नैतद्दोषप्रदानावसर इत्यलमधिकवचोविन्यासप्रयासेन।

एकञ्च तत्त्वं प्रासङ्गिकमनुपेक्ष्यं शब्दसाधुत्वविषयकमपि प्रकटीकर्तुमीहे। तत्र 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति पाणिनिसूत्रेण 'श्रीगणेश' इत्यत्र णुट् कथं न कृत इति प्रश्नः। नित्यं हि णुट् क्रियते। न विकल्पः, अत एव 'इको यणचि' इति

सूत्रे कथं न भगवता पाणिनिना णुडागमो विहित इति प्रश्ने छन्दोवत्सूत्राणि भवन्तीति छन्दोऽङ्गत्वाद् व्याकरणस्य क्वचिद् व्याकरणरीत्यतिक्रमेऽपि दोषभावस्य समाधानरूपेण कृतत्वं प्रामाण्यमाश्लिष्यति। आर्षप्रयोगसङ्कोचस्तु न सावसरः, सर्वत्र तदुपायस्यानाश्रयणात्। अतो णुडागमः कथं न कृत इति प्रश्नस्तदवस्थ इति चेत्, न, अकारेकारयोर्गुणे कृते सति णकारस्य पदान्तत्वं ततश्च णुटः प्रसङ्गस्तस्मिन्नेवावसरे 'अच परस्मिन् पूर्वविधौ' इति सूत्रेण परनिमित्तकस्य गुणस्य एकारस्य स्थानिवद्भावेनाकारस्योपलम्भात्पूर्वस्य णस्य णुडागमे विहिते स्थानिवद्भावात् णकारस्य पदान्तत्वाभावेन 'ङमो ह्रस्वादचि....' इत्यादि सूत्रीयोद्देश्यतावच्छेदकाभावेन स्वीयोद्देश्यतावच्छेदकावच्छेदेनैव शास्त्रप्रवृत्तेः प्रकृते तदभावात्तच्छास्त्रप्रवृत्तिबाधात् णुटः प्रसक्तेरभावादिति समाधानेन दोषाभावेन यथाश्रुतप्रयोगस्य शुद्धत्वेन पुण्यजनकतायाः सद्भावेन व्याकरणसिद्धत्वरूपशुद्धत्वानपायात् साधुत्वात्।

गणानामधीशो गणेश इत्यत्र गणशब्देन कोऽर्थ गृह्यत इति जिज्ञासा स्वाभाविकी, यतो हि विघ्नेश्वर इत्यपि कथ्यते भगवान् गणेशः। अतो गणशब्देन विघ्नव्यूहरूपो गणो गृह्यते।

## मङ्गलविमर्शः

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरन्ति शिष्टाः। तेन निर्विघ्नं ग्रन्थस्य समाप्तिर्भवति। अत एव शिवाद्वैतदर्पणे मङ्गलाचरणं कृतम्। शिष्टत्वञ्च यद्यपि वेदप्रामाण्याभ्युपगन्तृत्वमेव ग्राह्यम्, तथापि प्रकरणप्राबल्यादत्र मङ्गलाचरणप्रकरणे फलसाधनतांशे भ्रान्तिरहितत्वमेव शिष्टत्वं ग्राह्यम्, अविगीतशिष्टाचारविषयत्वेन हेतुना मङ्गलस्य सफलत्वसाधनात्। तथा हि—मङ्गलं सफलम्, अविगीतशिष्टाचारविषयत्वात्, निर्विशेषं न साभान्यमिति न्यायात्, केवलस्य सामान्यतः सफलत्वस्यानुमितौ सत्यामपि विशेषान्निर्णयासम्भवाद्विशेषफलजिज्ञासायां पुनरनुमानं मानमुपतिष्ठते—मङ्गलं ग्रन्थसमाप्तिफलकं समाप्त्यन्याफलकत्वे सति समाप्तिफलकत्वादिति। इत्थञ्च मङ्गलस्यावश्यकत्वं सिद्ध्यति। विशेषतस्तु न्यायसिद्धान्तमुक्तावलीग्रन्थे तद्व्याख्यायां दिनकर्यां रामरुद्र्याञ्च द्रष्टव्यम् ।

अत्र किञ्चिच्चिन्त्यते। तथा हि—'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः' इति रीत्या यावत्पर्यन्तं मङ्गलस्य लक्षणं तत्र प्रमाणञ्च न दीयते तावत्पर्यन्तं तस्यैवासिद्धौ विघ्नव्यूहनिवर्तकत्वग्रन्थसमाप्तिप्रयोजकत्वप्रत्याशा दूरापास्ता स्यात्। यदि च विशिष्य लक्षणमेव क्रियते यद् विघ्नव्यूहनिवर्तकत्वं ग्रन्थसमाप्तिप्रयोजकत्वं वा मङ्गलत्वमिति,

तर्हि न्यायसिद्धान्तमुक्तावलीग्रन्थे मङ्गलाव्यवहितोत्तरजायमानसमाप्तिं प्रति मङ्गलं कारणं 'सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः' इति वाक्यप्रामाण्याद् गणेशस्तुति-पाठाव्यवहितोत्तरसमाप्तिं प्रति गणेशस्तवपाठः कारणमिति विभागोऽनुपपन्नः, यतो हि स्तवपाठस्यापि तादृशलक्षणलक्षिततत्वेन मङ्गलत्वादेकेनैव कार्यकारणभावेन तस्यापि गतार्थत्वादिति चेदत्रायं समाधिः —

इष्टस्मरणं हि मङ्गलम्। कोऽपि हि आप्तो ग्रन्थरचनातः प्राक् स्वेष्टं स्मरति ततो ग्रन्थमारभते। स च नास्तिको वा भवेदास्तिको वा। कश्चिच्च स्वेष्टं स्मृत्वा ग्रन्थादौ स्वेष्टस्मारकं मङ्गलमुल्लिखति कश्चिन्न लिखतीति रुचीनां वैचित्र्यात् फलबलकल्पनायाश्च बलीयस्त्वात्तथैव दर्शनाच्च स्वीक्रियते। अत एव यत्र क्वचन ग्रन्थे मङ्गलाचरणमुट्टङ्कितं नास्ति समाप्तिश्च दृश्यते तत्र जन्मान्तरीयमङ्गलकल्पनापि करणीया न भवति। इष्टस्मरणरूपस्य मङ्गलस्य मनसि कृतत्वेऽपि ग्रन्थेऽनुलेखकरणाभावस्य सत्त्वेनादोषात् ।

एतादृशस्य मङ्गलस्य सत्त्वेनैव न्यायसिद्धान्तमुक्तावलीग्रन्थस्यापि प्रामाण्यं जागरूकं तिष्ठति। इष्टस्मरणं ज्ञानरूपं विनायकस्तवपाठः क्रियारूपः, 'पठ व्यक्तोच्चारणे' इति पाणिनिधातुसत्त्वात्। तथा चेष्टस्मरणमन्यादृशं गणेशस्तवपाठो भिन्न इति हेतोस्तत्र ग्रन्थे कृतः कार्यकारणभावः सर्वथैव निर्दुष्टः। तस्येत्थं स्वरूपं भवति—इष्टस्मरणरूप-मङ्गलाव्यवहितोत्तरजायमानसमाप्तिं प्रति इष्टस्मरणरूपं मङ्गलं कारणम्, गणेशस्तवपाठोत्तर-जायमानसमाप्तिं प्रति गणेशस्तवपाठः कारणमिति। विना लक्षणोपन्यासेन मुक्तावलीग्रन्थस्य प्रामाण्यं गणेशस्तवपाठस्य च पारिभाषिकमङ्गलभिन्नत्वं नास्तिकग्रन्थारम्भेऽपि मङ्गलसत्त्वेन केवलमुल्लेखाभावेन मङ्गलाभावेऽपि समाप्तिदर्शनजन्यकारणाभावेन कार्यसत्त्वलक्षण-व्यतिरेकव्यभिचारनिश्चयतत्साधनजन्मान्तरीयमङ्गलानुसरणप्रभृतिप्रयासवैयर्थ्यञ्च न सिद्ध्येत्। अत एव न्यायकन्दलीग्रन्थे पन्थानमेतमाश्रित्य प्रायेण दोषा निराकृताः।

व्याकरणमहाभाष्यव्याख्याने प्रदीपे कैय्यटकृत उद्योते च नागेशकृतेऽपि मङ्गलस्य स्वरूपमभिव्यञ्जितम्। तत्र 'अगर्हिताभीष्टार्थसिद्धिर्मङ्गलम्' इति निर्दिष्टम्। येन क्रियमाणेनागर्हिताभीष्टस्य सिद्धिर्भवति तन्मङ्गलम्। लोके च मङ्गलकार्ये शुभे विवाहे समुत्सवेऽन्यानुकूले कार्येऽपि मङ्गलशब्दप्रयोगो लक्षणया क्रियते मङ्गलमस्य जातमित्यादि-विवेचितं तत्रोद्द्योते इति सारः।

अस्मिंश्च शिवाद्वैतदर्पणे चत्वारः परिच्छेदाः सन्ति। तस्येदमेव तात्पर्यं यदुपनिषद्रूपमुख्यवेदान्तशब्दार्थानुगामित्वं ब्रह्मसूत्रस्य वर्तते। अत एव ग्रन्थेऽस्मिन्

मङ्गलाचरणानन्तरं श्रुत्यनुसारेणैव ब्रह्मसूत्रप्रणयनं भगवता व्यासेन कृतमिति द्योतनार्थम् —'अथ परमकारुणिको भगवान् बादरायणः संसारतापसन्तप्तान् जनान्' इत्यादिना ब्रह्मसूत्रमेव प्राधान्येनाधिकृतम्। ब्रह्मसूत्रमाधारीकृत्यैतद्ग्रन्थप्रणयने प्रवृत्तिश्चानेन व्यापारेण परिदर्शिता। ब्रह्मसूत्रञ्च श्रुतिमूलकमिति दर्शयितुं 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' (श्वे० ४.१४), 'ब्रह्मविदाप्नोति परम्' (तैत्ति० २.१.१) इत्यादिश्रुतिवाक्यानि परिदर्शितानि। तथा च यथा ज्ञानविषयकज्ञानं ज्ञानविषयविषयकमिति नियमस्तथैवैतद्ग्रन्थमूलं ब्रह्मसूत्रम्, तच्च श्रुतिमूलकमिति तन्मूलकं तन्मूलमूलकमिति सुतरां समायातम्। अत एव श्रुत्युत्तमवचांसि समुदाहृतानि परमपुरुषार्थमोक्षहेतुज्ञानकारणत्वप्रतिपादकानि।

करुणायां चरतीति व्यवहरति वा कारुणिकः परमश्चासौ कारुणिकः परमकारुणिकः। करुणायां करुणाश्रये वा परमत्वं फलनिरपेक्षत्वम्। हितोपदेशकरणेनैव तेषां तत्त्वं हितोपायपरिदर्शनपरत्वादिति विवेक्तव्यम्। ब्रह्मसूत्रे च चत्वारोऽध्यायाः सन्ति। तदनुगामिनि चास्मिन् ग्रन्थेऽपि चत्वारः परिच्छेदाः। परिच्छेदशब्दस्य च निश्चयः परमात्मज्ञानमर्थः। तज्जनकत्वाच्चैषां प्रकरणानामपि तादर्थ्यात्ताच्छब्द्यमिति न्यायेन तथा प्रयोगः। यथा ह्युपनिषच्छब्दस्य ब्रह्मविद्या मुख्योऽर्थः, तज्जनकत्वाद् ग्रन्थोऽप्युपनिषच्छब्देन प्रोच्यते; एवमेवाद्वैतसिद्धिशब्दस्याद्वैतनिश्चयोऽर्थः, तादृशप्रमात्मकनिश्चायकत्वेन ग्रन्थोऽपि 'अद्वैतसिद्धिः' इत्येवंरूपेण व्यवहृतः। ब्रह्मसूत्रे चतुर्णामध्यायानां क्रमेण समन्वयः, विरोधपरिहारः, साधनम्, फलमिति चत्वारो विषयाः। अत एव समन्वय-विरोधपरिहारसाधनफलाध्यायशब्देन वेदान्तिसमाजे समाख्या प्रसिद्धा।

परमात्मतत्त्वस्य परमशिवस्य ज्ञानतत्साधनतत्फलतदधिकारिप्रभृतिविषयनिरूपकत्वेन प्रस्थानत्रयी प्रसिद्धा। उपनिषदः, ब्रह्मसूत्राणि, गीता च। ग्रन्थेऽस्मिन् लघुकायेऽपि सर्वे विषयाः प्रायेण सूत्ररूपेण व्याख्यानरूपेण च परिदर्शिताः। सूत्ररूपत्वन्तु समासेनाल्पवाक्यप्रयोगेण प्रोक्तत्वम्, व्याख्यानरूपेण तु श्रुतियुक्तिदृष्टान्तसमन्वयतद्-बाधाबाधविचारचातुरीचमत्कारिवाक्यकदम्बप्रयोक्तृत्वमिति ग्रन्थदर्शनेनैव ग्रन्थकृतां वाणीप्रागल्भ्यप्रभावकारिज्ञानजनकशब्दविन्यासोपदेशपदार्थनिरूपणपरिदर्शनेन परमतत्त्व-शिवसाक्षात्कारकृतत्वं ग्रन्थकर्तुरनुमीयते। अत एव तु श्रुतौ 'नावरेण प्रोक्तः सुविज्ञेय एष धर्मः' इति प्रोक्तम्। 'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत' इत्यादि च काठके। तादृशवरत्वञ्चैषां ग्रन्थस्थवाक्यश्रवणमनननिदिध्यासनैर्जायत इति स्वात्मसाक्षिकं ब्रूमः। अत एवात्र किञ्चिल्लेखने मम मनसि श्रद्धोन्मेषः।

साम्प्रतं वस्तुद्वयविचार आवश्यकः। प्रथमस्तु यानि श्रुतिवाक्यानि ग्रन्थादौ प्रदर्शितानि, तेषां वाक्यार्थो विवेचनीयः, येन ज्ञानमोक्षसाधनत्वप्रतिज्ञा ग्रन्थकृतः सङ्गच्छेत। द्वितीयस्तु ब्रह्मसूत्रग्रन्थप्रथमसूत्रस्य विषयवाक्यं श्रुतिस्थं किमिति। यतो हि कर्मकाण्डपरकश्रुतिस्थमन्त्रब्राह्मणात्मकवेदवाक्यनिर्णयाय पूर्वमीमांसा प्रवृत्ता, ज्ञानकाण्डोपनिषद्भागीयमन्त्रब्राह्मणतात्पर्यनिर्णयफलकप्रवृत्तिरुत्तरमीमांसा इति सिद्धान्तः। तथा च तत्तत्सूत्राणां विषयवाक्यं किमिति नूनं प्रदर्श्य तदनन्तरं सूत्रार्थो विवचनीय इत्युचिततमम्। शिवाद्वैतदर्पणे तत्र कृतं टिप्पणीमध्येऽपि नोपलब्धमिति तत्र दृष्टिर्नूनं देयेति प्रसङ्गः।

## ब्रह्मतल्लक्षणविमर्शः

तत्र शिवाद्वैतदर्पणे ब्रह्मसूत्रसरणिमनुसृत्यैव पदार्थविमर्शः प्रकरणविभागश्च कृतः। विभागो नाम स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारक-धर्मिप्रतिपादनम्। एवञ्च वेदान्तशब्दवाच्यमुख्यार्थभूतानामुपनिषदामर्थनिर्णयायैव ब्रह्मसूत्राणि प्रणीतानि भगवता वेदव्यासेन। तत्र चानेकानि भाष्याणि भाषितानि तैस्तैराचार्यैरिति वस्तुस्थितिः। तत्र ब्रह्मसूत्रसूचितपदार्थान् स्वसिद्धान्तानुरूपत्वेनोपस्थापयितुमादित एव सूत्रात् श्रीमता शिवानुभवशिवाचार्येण पदार्थवाक्यार्थरूपेण परिगृहीता। नीलकण्ठभगवत्पादप्रणीतभाष्यमार्गमविहाय तत्त्वनिरूपणे जागरूकः किल ग्रन्थकारः।

अतः स्वग्रन्थे शिवाद्वैतदर्पणे चतुःपरिच्छेदभेदभिन्ने 'अथातो ब्रह्मजिज्ञासा' इति प्रथमब्रह्मसूत्रस्य पदार्थनिरूपणं वीरशैवमतमनुसृत्य विहितम्। धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु नित्यत्वात्परमपुरुषार्थं मोक्षं प्रति ब्रह्मज्ञानस्यैव हेतुत्वात् 'ब्रह्मविदाप्नोति परम्', 'तरति शोकमात्मवित्', 'ज्ञात्वा देवं विमुच्यते', 'ऋते ज्ञानान्न मुक्तिः', 'ज्ञात्वा देवं मुच्यते सर्वपाशैः', 'उपमर्दञ्च' 'मुक्तोपसृप्यात्' इत्यादिश्रुतिसूत्रभाष्यानुभवलोक-प्रसिद्धिभिर्मोक्षैकहेतुब्रह्मज्ञानस्य महत्त्वमुद्घोषितम्। तत्र चोद्देश्यतावच्छेदकप्रयोज्यत्वं विधेयस्येति कश्चन व्याप्तिसिद्धः कार्यकारणभावः। यथा—'धनवान् सुखी' इति। तत्र धनवन्तमुद्दिश्य सुखं विधीयते। तथा च उद्देश्यो धनवान्, उद्देश्यता धनवति विद्यते, उद्देश्यतावच्छेदकञ्च धनम्, तत्प्रयोज्यत्वं सुखस्येति समन्वयः। एवमेव धूमवान् वह्निमानित्यत्र धूमवन्तमुद्दिश्य वह्निर्विधीयते। उद्देश्यता धूमवति, उद्देश्यतावच्छेदकश्च धूमः, तत्प्रयोज्यत्वं वह्नेः।

ननु धनवान् सुखीत्यादिस्थले नूनमविरोधेन खलु उद्देश्यतावच्छेदकप्रयोज्यत्वं विधेयस्य वर्तते, किन्तु धूमवान् अग्निमानित्यत्र तु भिन्ना स्थितिः, अग्निरेव धूमस्य कारणमिति हेतोर्धूमस्य प्रयोजक एवाग्निः, न तु धूमो वह्नेः प्रयोजकः, धूमाभावकालेऽपि अग्नेः सत्त्वात्। कारणन्तु कार्यात्पूर्वमेव सत्तावान् भवत्येवान्यथा कारणत्वमेव न स्यात्। अतोऽत्र धूमवान् वह्निमानित्यादिस्थलेषु उद्देश्यतावच्छेदकप्रयोज्यत्वं विधेयस्य न सम्भवतीति नियमभङ्गप्रसङ्ग इति चेत्, न, ज्ञानद्वारा तत्सम्भवेनादोषात्। यद्यपि धूमो वह्निजन्यः, किन्तु धूमज्ञानं वह्निज्ञानस्य जनकं भवत्येव, व्याप्यदर्शनेन व्यापकानुमानस्य मानसिद्धत्वात्। वह्निज्ञानं धूमज्ञानजनकमिति नियमो नास्ति, अयोगोलकादौ धूमाभावेऽपि अग्निज्ञानसम्भवात्।

इदमत्राकूतम्—मोक्षं प्रति ब्रह्मज्ञानस्य कारणत्वात् ज्ञानञ्च विषयशूरम्, ज्ञानेच्छाप्रयत्नानां सविषयकत्वात्। 'अथातो ब्रह्मजिज्ञासा' इत्यत्र च ब्रह्मणो नामग्रहणाद् ब्रूते ग्रन्थकारः—'अथ किं ब्रह्म किं तस्य लक्षणम्' इति। अत्र यो हि पूर्वपक्षः स्थापितः, स किलातीव समीचीनः। यतो हि 'अथातो ब्रह्मजिज्ञासा' इति सूत्रं विधाय भगवता व्यासेन किं तद्ब्रह्मात्र सूत्रे विवक्षितमिति शङ्कायां ब्रह्मस्वरूपनिर्धारणायैव द्वितीयं 'जन्माद्यस्य यतः' इति सूत्रितम्। न तु ब्रह्मस्वरूपस्य पृथक्त्वेन बोधयितुं सूत्रान्तरं विहितम्। अत्र तु 'अथ किं तद्ब्रह्म किं तस्य लक्षणम्' इत्युक्तम्। तन्न युक्तम्, 'अथ किं तस्य लक्षणम्' इत्येव वचनं सार्थकम्, लक्षणद्वारैव लक्ष्यस्वरूपनिर्धारणात्। अत एव वेदान्तपरिभाषायां मङ्गलानन्तरमेव धर्मराजाध्वरीन्द्रेण 'इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः, " न स पुनरावर्तते" इत्यादिश्रुत्या तस्य नित्यत्वावधारणात्। इतरेषां त्रयाणान्तु प्रत्यक्षेण, "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुत्या नित्यत्वावगमाच्च। स च ब्रह्मज्ञानात्। इति ब्रह्म तज्ज्ञानं तत्प्रमाणञ्च सप्रपञ्चं निरूप्यते' इति प्रोक्तम् एकमेव ब्रह्म तत्र वर्तते न तु तल्लक्षणमपि, द्वयोरेकस्यैवोपादानेन प्रयोजनसिद्धेः।

अन्यत्तु सर्वं शोभनमेव ग्रन्थस्थं सर्वं पदं वाक्यञ्च वर्तते। इत्थञ्चापाततः पूर्वपक्षोपस्थापनेन ग्रन्थकारस्य न्यूनता दक्षताराहित्यं युक्तायुक्तविवेकशून्यत्वञ्च चकास्ति, तथापि विमर्शे कृते ग्रन्थकारस्य वाक्यं सार्थकं सप्रयोजनमप्रतिपत्तेरतिप्रतिपत्तेश्च निवारकमेव लोकोत्तरं निर्दोषं विद्यते।

यद्यपि लोके तटस्थलक्षणस्थले स्वरूपलक्षणस्थले च लक्षणद्वारेणैव लक्ष्यव्यवस्थितिर्दृश्यते, 'का पृथ्वी कश्चन्द्रः' इति जिज्ञासानिवर्तकज्ञानजन्यत्वेन पृथक्प्रमाणाभावात्। श्रुतावपि 'यतो वा इमानि भूतानि जायन्ते' इति तटस्थलक्षणेन 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दं ब्रह्म' इति लक्षणद्वयेनैव ब्रह्मस्वरूपनिर्धारणदर्शनात्।

तत्र, बाहुल्येन तथा सत्त्वेऽपि क्वचिद्विना लक्षणमपि वस्तुनिर्धारणात्, यदा हि कश्चिज्जिज्ञासते कश्चन्द्रः का पृथ्वी? आप्तः पुरुषो वक्ति आकाशे सूर्यादिभिन्नश्चन्द्रः इयञ्च पृथ्वीति। नहि तत्र लक्षणप्रसरः। तथैव प्रकृतेऽपि तत्त्वमसीत्यादिश्रुतिमूलको व्यवहारः स्यात्, जीवो ब्रह्म, त्वं ब्रह्म इति वाक्यप्रयोगमात्रेणैव ब्रह्मस्वरूपनिर्णयात्। अतोऽत्र प्रोक्तं 'ब्रह्म तल्लक्षणमिति चेदुच्यते' इत्युक्तम्। वेदान्तपरिभाषायान्तु निदर्शनं समाधानेनानेन समाहितम्। तत्र ब्रह्मण उपादानेन लक्षणद्वारेणैव तन्निरूपणात्। बाहुल्येन तथैव भवतीति मया प्रोक्तत्वात्, 'वाक्यं वक्तुरधीनं हि' इति महाभाष्ये भगवता पतञ्जलिना प्रोक्तत्वात्, स्वतन्त्रेच्छस्य मुनेः परतन्त्रायोगात्, स्पष्टाभिधानस्य युक्तत्वात् सर्वं वाक्यं समीचीनमेवेति मन्ये।

अन्यैरपि मात्सर्यमुत्सार्य विचार्य कार्यं न तु दोषदृष्टिश्च कर्तव्या, स्वयमेव दोषकर्दमनिपातापत्तेः। तथा चोक्तमनुमितिदीधितौ परमगुरुणा तार्किककुलपूजितपादपीठेन रघुनाथशिरोमणिना विद्वन्मणिना —

मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति चेतः ।। इति।

अत एव द्वितीयपरिच्छेदेऽपि शिवाद्वैतदर्पणे 'अथ को जीवः? किं तस्य लक्षणमिति चेदुच्यते' इत्येव प्रोक्तमित्यहो ग्रन्थकर्तुर्वाग्दोग्ध्यम् ।

तत्र शिवाद्वैतदर्पणस्य ब्रह्मसूत्रानुसारित्वाद् ब्रह्मसूत्रे यथा चत्वारि प्रकरणानि, तथैवात्रापि ग्रन्थे चत्वारः परिच्छेदाः सन्ति। परिच्छेदो नाम वस्तुनिश्चयः। निश्चयस्तु भ्रमात्मकोऽपि भवति, उपसर्गेण विलक्षणार्थावगतेः। तथा चोक्तम्—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
नीहाराहारसंहारविहारपरिहारवत् ।।

उपसर्ग उपद्रवः। उप सामीप्येन द्रावयति अर्थबोधं कारयतीत्यर्थः। यथा भू-धातुः सत्तानुकूलार्थकः। किन्तु अनु-उपसर्गसहितोऽनुभवरूपमर्थमवबोधयति। मूढोऽपि जानाति भवनानुभवयोर्भेदम्। अत एव शास्त्रेषु प्रोक्तं यद् 'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्' इति। यथा गच्छतीति गौः। गम्धातोर्डाप्रत्यये कृते सति गोशब्दः सिद्ध्यतीति व्युत्पत्तिलभ्योऽर्थः। गच्छति तु महिषी अपि, किन्तु लोके तां कोऽपि न गोशब्देन व्यवहरति, लोकानुसारित्वान्निखिलव्यवहारस्य। जानन्ति हि शब्दतत्त्वविद एनं विषयम्। अत एव—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सानिध्यतः सिद्धपदस्य वृद्धाः ।। इति।

वृद्धोक्तं सङ्गच्छते। अत एव व्याकरणे भूधातुर्, अस्धातुश्च यद्यपि एकार्थक एव, भू सत्तायाम्, अस् भुवि इत्युक्तेः, तथापि आकाशमस्ति इत्येव भवति, न तु घटो भवति, पटो मठो वा भवतीत्यादिवदाकाशं भवतीति प्रयोगो व्यवहारविषयः। कुत इति चेद् लोकव्यवहारानुसारित्वाल्लिङ्गादेः। सर्वशक्तिग्राहकेषु प्रमाणेषु व्यवहारस्यैव शक्तिग्रहणे मूर्धन्यप्रमाणत्वात्। अत एवोक्तम्—

'यद्यपि शुद्धं लोकविरुद्धं नाचरणीयं नाचरणीयम्' इति। स च शक्तिग्रहः संयोगविप्रयोगादिशक्तिसङ्कोचकैः सहकारिभिः सङ्कोचं विकासञ्च सम्प्राप्य लोके विलक्षणमर्थमुपस्थापयति। तथा चोक्तं भर्तृहरिणा—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
तथैव किल शब्दानामनादिर्योग्यता मता ।। इति।

सा च शब्दनिष्ठाऽर्थविषयकबोधजनकत्वलक्षणशक्तिर्वृद्धैश्चतुरैरुहापोहदक्षैः प्रकरणादिसहकारिज्ञानवद्भिरेव समीचीनतया ज्ञायते। ज्ञायमाना शक्तिः शक्तिज्ञानं वा निष्कम्पप्रवृत्तिजनकमिति शास्त्रसम्मतम्, अनुभवसिद्धञ्च।

अत एव प्रोक्तमभियुक्तैः—

दैवीषु वाक्षु विविधाः प्रविशन्ति सन्तो
वाचां विमर्शसहनास्तु कियन्त एव ।
चूते पतन्ति बहवः परितः पतङ्गाः
शब्दानुसङ्गनिपुणास्तु कियन्त एव ।। इति।

अपरञ्च 'मूढः श्रुत्वापि तद्वस्तु न जहाति विमूढताम्' इति। शब्दानुसङ्गः शब्दनिष्ठा शक्तिः। यथा सैन्धवशब्दो रसविशेषस्य लवणस्य वाचको घोटकस्य च वाचकः। किन्तु भोजनसमये यदि केनचिदुच्यते सैन्धवमानय तदा लवणस्यैव ग्रहणं भवति, तद्बोधतात्पर्येणैव वक्त्रा शब्दोच्चारणात्। यदा च यात्रासमये प्रोच्यते सैन्धवमानय, तदा अश्व एवानीयते न तु लवणमिति। तत्र को हेतुः? शब्दः क्रिया च समानैव, तदापि प्रकरणबलादर्थविशेषस्यैव बोधो भवति नान्यस्य, शब्दनिष्ठशक्तिसङ्कोचे प्रकरणादेर्बलीयस्त्वात्। तथा चोक्तम् —

संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं चेति ।



## द्वितीयः परिच्छेदः

तत्र प्रथमे प्रकरणे विदुषा श्रोत्रियब्रह्मनिष्ठेन लेखननिपुणेन शिवानुभवाचार्येणाभ्य-र्हितत्वाद् ब्रह्मण एव लक्षणं लक्षितम्। तदनन्तरञ्च द्वितीयेऽद्वितीये प्रकरणे जीवमधिकृत्य कृतो विमर्शः। यतो हि जीवभावमापन्नं ब्रह्मैव बद्धं मुक्तञ्च भवति। अत एव श्रुतौ 'तत्त्वमसि' इत्येवोपदेशरूपं महावाक्यं प्रयुक्तम्। वाक्ये महत्त्वञ्च महानिष्टहेतुसकलानर्थमूल-मूलाविद्यानिवर्तकज्ञानजनकत्वम्। लौकिकानि हि वाक्यानि लौकिकार्थविषयकनिष्कम्प-प्रवृत्तिजनकज्ञानजनकानि भवन्ति। श्रुतिस्थानि महावाक्यानि तु सकलप्रवृत्तिहेतु-मूलाज्ञाननिवर्तकज्ञानजनकानि भवन्तीति तानि महावाक्यानीति शब्दैर्व्यवहृतानि। यथाऽ-न्यानि न्यायवेदान्तसूत्रभाष्याणि —

सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।।

इति लक्षणोपेतानि भाष्याणि एव, व्याकरणमहाभाष्यं महर्षिपतञ्जलिलिखितन्तु महाभाष्यशब्देन व्यवह्रियते। तत्कुत इति चेत्तत्र महत्त्वमिदमेव यत्रहि तद्भाष्यं केवलं सूत्रस्थं पदमादाय व्याख्यानरूपमेव, किन्तु कुत्र केन शब्देन किं ग्राह्यमिति व्यवस्थापयत्यपि। यथा 'त्यदादीनामः' इति सूत्रेण अकारादेशः क्रियते। स सर्वेषां भवतु यस्य कस्यापि वा शब्दविशेषस्य वेति शङ्कायां निर्णायकं किमपि व्यवस्थितं प्रमाणं नास्ति। भगवता भाष्यकृता पतञ्जलिना मुनिना इत्थंभूतव्यवस्थारूपं नियमनं कृतम्, 'द्विपर्यन्तानामेवेष्टिः' इति, सर्वादिगणपठितशब्दानुक्रमे द्विपर्यन्तानामेव शब्दानामकारादेशः। तेन नाव्यवस्थापत्तिः। तथा चोक्तं कुमारिलभट्टैः —

सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य नियमेन निवर्तनम् ।। इति।

यथा सर्वो हि लोको जानाति यद् अग्निर्नाम दाहको द्रव्यविशेषः। तत्र यदि केनचित्कार्यकारणभावव्यवस्था क्रियेत यद् नाग्निर्दाहक इति। तर्हि केवलेन व्यवस्थापक-वाक्यविशेषेण सर्वलोकसिद्धदाहजनकत्वलक्षणविलक्षणकार्यजनकत्वरूपसामर्थ्यविशिष्ट-

द्रव्यविशेषरूपार्थबोधजकत्वं न विनाश्यते, किन्तु तादृशवाक्यविन्यासकर्त्रैव किल उपहासभाजनं भवतीति दृष्टचरम्।

अत एव शाब्दबोधे योग्यता हेतुरिति शास्त्रेषु व्यवस्थापितम्। योग्यता नाम बाधाभावः। बाधश्च प्रमाणान्तरेण विपरीतार्थनिश्चये तद्विरुद्धार्थबोधनराहित्यम्। यथा सर्वे जानन्ति यत्क्षेत्राणि वृक्षा वा वारिणा सिच्यन्ते। तत्र यदि कश्चिद् विपश्चिदपि ब्रूते—अग्निना सिञ्चतीति, तर्हि बोधो न भवति। तत्र को हेतुः?—बाध एव। शाब्दबोधजनकयोग्यताया अभावात् कारणाभावे कार्याभावस्य ध्रौव्यात्। इत्यलं प्रसक्तानुप्रसक्तचर्चया प्रकरणमधिकृत्य क्रियते विचारः।

तत्र श्रुतिसारभूतं श्रुत्यर्थनिर्णायकं ब्रह्मसूत्रमवलम्ब्यैव ग्रन्थकृद्भिस्तत्रभवद्भिः शिवानुभवाचार्यैः कृते विमर्शे ततोऽन्यक्रमो न युक्तः। एवञ्च यथा ब्रह्मसूत्रे चत्वारि प्रकरणानि तथैवात्रापि चत्वार एव परिच्छेदा विलसन्ति।

प्रथमाध्यायस्तु समन्वयाध्यायशब्देन प्रोच्यते। द्वितीयाध्यायो विरोधपरिहाराध्यायः। तृतीयाध्यायस्तु साधनाध्यायः। चतुर्थाध्यायस्तु फलाध्यायः। इति विभागः 'फलमत उपपत्तेः' इत्यादि सूत्रप्रामाण्यात्।

तथैव ग्रन्थेऽत्रापि पदार्थनिरूपणं कृतम्। वेदान्तानामद्वितीये परमात्मनि स्वात्मनि परमं तात्पर्यं विद्यते। स च जीवशिवयोरभेदरूपः। स एव वेदान्तस्य विषयः। एवञ्च शिवाशिवयोरैक्यरूपमेकत्वलक्षणमभेदं बोधयितुं प्रवृत्ताः किल वेदान्ताः। ते च कथमकस्मादन्यार्थं निरूपयेयुः। तत्र चैकत्वं ययोः द्वयोः द्वित्वेनाविद्यया प्रतिभासमानयोः निरुपाधिकसोपाधिकयोर्ब्रह्मजीवयोरेवाभेदरूपम्। तच्चैकत्वं तावत्पर्यन्तं न व्यवस्थितं भवति यावद्द्वयोरैक्यं भेदाभावो निरूपणीयस्तयोः स्वरूपं तत्र प्रमाणञ्च न परिदर्श्यते। अत एव ग्रन्थे तयोर्द्वयोः पदार्थयोः स्वरूपं लक्षणेन प्रमाणेन च तयोः सत्ता विमृष्टा। नहि केवलं लेखनमात्रेण कश्चित्पदार्थः प्रसिद्धिमाप्नोति, किन्तु लक्षणेन प्रमाणेन च।

तत्रेदमपि विज्ञेयम्—नहि केनचिदुच्यते 'शशशृङ्गखनिता भूमिः' इति, तद् वाक्यविन्यासमात्रेण शशशृङ्गः सर्वप्रमाणाविषयः प्रसिद्धिमाप्नोति। अतः प्रमाणेन सिद्धः पदार्थो लक्षणेन स्वेतरव्यावृत्तस्वरूपेण व्यवहारविषयो भवति। यद्यपि लक्षणान्यपि प्रमाणान्येव। तानि हि स्वलक्ष्यं लक्ष्येतरेभ्यः पदार्थेभ्यो व्यावर्त्य बोधं जनयन्ति। तथा चोक्तम्—'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्', यथा पृथिव्या लक्षणं गन्धवत्त्वम्। तदनन्तरं लक्षणमेव हेतुसद्भावेन स्वभावेन स्वसत्तया लक्ष्यं व्यावर्तयत्यनुमापयति। तथा हि—पृथिवी स्वेतरव्यावृत्ता गन्धवत्त्वात् यन्नैवं तन्नैवं यथा जलमित्यादि। तथा

चानुमानप्रमाणानुग्राहकं लक्षणं तर्कवत्प्रमाणमेव। तथापि लक्षणप्रयोजनन्तु लक्ष्येतरव्यावृत्तलक्ष्यबोधनमेवेति कृत्वा प्रमाणेन प्रसिद्धस्य सतः पदार्थस्यैव व्यावृत्तिजनकत्वाल्लक्षणं पृथग्विन्यस्तमिति विवेक्तव्यम्।

तत्र द्वितीये परिच्छेदे जीवमधिकृत्य कृतो विमर्शः—जीवो नामेत्यादिना। 'अथ को जीवः किं तस्य लक्षणमिति चेदुच्यते' इत्यनेन ग्रन्थेन द्वितीयपरिच्छेदः समारभ्यते। ततश्च जीवस्य स्वरूपमुपदर्शितम्। 'तत्राङ्गपर्यायवाचकोऽहंप्रतीतिविषयो जीवः। तल्लक्षणन्तु स्थूलचिदचिद्विशिष्टो जीवः। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः'। तत्र लक्षणे यदि 'अङ्गपर्यायवाचक' इत्येवांशः स्यात्तदा नूनं करचरणप्रभृतिषु स्यादतिव्याप्तिः, लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वादतोऽहंप्रतीतिविषय इत्यंशस्तत्र योजितः। केवले चास्मिन्नेवांशे निवेशिते सत्यहं गच्छामि लङ्घयामि, अहं बुभुक्षितः पिपासित इत्यादिप्रतीतिभिः शरीरप्राणधर्मोल्लेखादहंप्रतीतिविषयत्वाच्च शरीरप्राणप्रभृतिषु अतिव्याप्तिर्वज्रलेपायिता भवेत्। अतोऽङ्गपर्याय इति पदम्। न च शरीरमपि अङ्गविशेष एव, तथा चाङ्गपर्यायवाचकत्वादहंप्रत्ययविषयत्वाच्च पुनरप्यतिव्याप्तिरिति वाच्यम्, चेतनत्वस्यापि तत्र निवेशात्। न च चेतनत्वमेव जीवस्य लक्षणमस्तु किमस्ति विशेषस्य प्रयोजनमिति वाच्यम्, ब्रह्मण्यतिव्याप्तेः।

अत एव रामानुजसिद्धान्ते चेतनत्वे सति अणुत्वं जीवस्य लक्षणं कृतम्। केवले चेतनत्वमात्रे गृहीते सति ब्रह्मण्यतिव्याप्तेः। तद्वारणायाणुत्वप्रवेशः। अणुत्वमात्राभिधाने।

ननु 'अङ्गपर्यायवाचकोऽहंप्रतीतिविषयो जीवः' इति लक्षणे वाच्य इति लेख्यं वाचक इति कथं युक्तमिति चेत्, न, बहुव्रीहिसमाससत्त्वेनादोषात्, 'अनेकमन्यपदार्थे' इति भगवतः पाणिनेः सूत्रात्। अन्यपदस्यार्थोऽन्यपदार्थः। तस्मिन् वाच्येऽनेकानि पदानि समस्यन्त इति सूत्रार्थः। यथा पीताम्बर इत्यत्र श्रीकृष्णार्थरूपार्थवाचक-शब्दाघटितपीतवस्त्रवाचकानि पदानि समासघटकपदभिन्नकृष्णपदवाच्यार्थवाचकत्वेन समस्यन्ते, तथैव प्रकृते योज्यम्। यदीह षष्ठीतत्पुरुषो भवेत्तदा भवेन्नाम दोषः पूर्वोक्तः। यथा पीताम्बर इत्यत्र यदि कर्मधारय समासः स्यात्तदा तु पीतवस्त्रमात्रवाचकत्वम्। बहुव्रीहौ तु पीतवस्त्रवत्प्रसिद्धश्रीकृष्णवाचकत्वमित्यहो समासस्य प्रभावः।

लक्षणञ्च द्विविधम्—स्वरूपलक्षणं तटस्थलक्षणञ्च। इतरानिरूप्यं लक्षणं स्वरूपलक्षणम्, यावल्लक्ष्यकालमनवस्थितत्वे सति व्यावर्तकं तटस्थलक्षणमिति विवेकः। विभागश्च सामान्यलक्षणमन्तरा नोपपन्न इति लक्षणस्य सामान्यं लक्षणं भवतीदमेव

असाधारणधर्मो लक्षणम्। धर्मेऽसाधारण्यञ्च लक्ष्यतावच्छेदकसमनियतत्वम्, समनियतत्वञ्च व्याप्यत्वे सति व्यापकत्वम्। तत्र यदि धर्मेऽसाधारण्यं लक्ष्यतावच्छेदकव्यापकत्वं गृह्येत, तदा शृङ्गित्वमपि गोत्वस्य व्यापकत्वात् स्यादसाधारणधर्मः, गोवृत्तित्वे सति गवेतरमहिष्यादिवृत्तित्वेनाधिकदेशे विद्यमानत्वेन व्यापकत्वात्। अतो धर्मेऽसाधारण्यं लक्ष्यतावच्छेदकव्याप्यत्वरूपमपि विवक्षितम्।

यदि तावन्मात्रमेव धर्मेऽसाधारण्यं स्याल्लक्ष्यतावच्छेदकव्याप्यत्वमसाधारण्यमिति तदा गोत्वस्य कपिलत्वमपि न्यूनवृत्तिधर्मत्वेन व्याप्यधर्मत्वादसाधारणधर्मो भवेत्। अतोऽसाधारणधर्मो लक्षणम्। एवञ्च लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदक-धर्मव्याप्यो धर्मो लक्षणं भवति। यथा गोर्लक्षणं सास्नादिमत्वम्। तद्धि लक्ष्यतावच्छेदक-गोत्वस्य व्याप्योऽपि व्यापकश्च भवति। स एव धर्मो गोर्लक्षणम्। तथैव प्रकृतेऽपि जीवलक्षणे योज्यम्।

एवञ्च अङ्गपर्यायवाचकोऽहंप्रतीतिविषयश्चेतनो जीवः। स एव विगलिताज्ञानको भक्त्या उपासनया च पशुभावं विहाय पतिभावमाप्नोति। अत एव श्रुतौ जीवमुद्दिश्य कृत उपदेशः—तत् त्वम् असि, न तु तद् ब्रह्म त्वमसीति।

ननु तत्र को विशेषः? जीवो ब्रह्म इति वा उच्यताम्, ब्रह्म जीवो वा प्रोच्यताम्, अर्थे कश्चिद् भेदस्तु नास्ति। दोषाभावे तथा कथनं व्यवस्था वा नोचिता इति चेत्, न, उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासत इति किल शास्त्रमर्यादा। तथा च जीवमुद्दिश्य ब्रह्मत्वविधाने दोषो नास्ति, जीवभावसमाप्तावपि ब्रह्मणः सत्त्वात्, तथैव ब्रह्मोद्दिश्य जीवत्वं विधातुं न शक्यते, जीवस्य मोक्षकाले जीवाभावाद् ब्रह्मणश्च सत्त्वात्, ब्रह्मत्वरूपोद्देश्यतावच्छेदकव्यापकत्वस्य जीवत्वेऽसम्भवेन तथा वक्तुमशक्यत्वात्। यथा लोके घटो मृत्तिका इति रूपेण घटमुद्दिश्य मृत्तिकात्वं विधातुं शक्यते। यत्र यत्र मृद्घटत्वं तत्र तत्र मृत्तिकात्वम्, यदा यदा घटत्वं तदा तदा मृत्तिकात्वमिति रूपेण दैशिककालिकोभयविधव्याप्तिसत्त्वात्। किन्तु तत्रैव मृत्तिका घट इति वाक्यं न प्रमात्मकबोधजनकम्। यतो हि उद्देश्यतावच्छेदकमृत्तिकात्वव्यापकत्वस्य घटत्वेऽभावात्। केवला मृत्तिकापि क्वापि भवत्येव, नहि सर्वैव मृत्तिका घटभावमापन्ना, असम्भवात्। अतो न तादृशानि वाक्यानि शिष्टानाम्।

पर्यायत्वञ्च शब्दनियमम्। तच्च किं रूपमिति चेदुच्यते—विभिन्नानुपूर्वीकत्वे सति एकधर्मावच्छिन्नवाचकत्वम्, यथा घटः कलश इत्यादि, कोशस्थाः शब्दाश्च। तत्र पर्यायलक्षणे विभिन्नानुपूर्विकत्वमित्येव स्यात्, तदा घटः पटश्च पर्यायः स्यात्।

अतस्तत्र एकधर्मावच्छिन्नवाचकत्वनिवेशः कृतः। यदि च तत्र पर्यायलक्षणे केवलमियानेवांशः स्यादेकधर्मावच्छिन्नवाचकत्वमिति तदा घटोऽपि घटस्य पर्यायः स्यात्, घटत्वावच्छिन्नवाचकत्वात्। अतो विभिन्नानुपूर्विकत्वे सति एकधर्मावच्छिन्नवाचकत्वं पर्यायत्वम्।

अपरञ्चासाधारण्यम्—अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यत्वम्। स एवासाधारणधर्मो लक्षणं भवति यत्रैते त्रयो दोषा न सङ्क्रामन्ति। नन्वेषां दोषत्वे किं बीजम्? दूषकतायां बीजाप्रदर्शनं तद्व्यवस्थापनमनुचितमिति चेत्, न, अव्याप्तेर्भागासिद्धिप्रयोजकत्वे, अतिव्याप्तेर्व्यभिचारादसम्भवस्य च स्वरूपासिद्धिप्रयोजकत्वेन दोषत्वात्। दोषत्वञ्च प्रवृत्तिप्रयोजकज्ञानप्रतिबन्धकत्वम्। गुणत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम्। दोषज्ञाने सति कोऽपि प्रवृत्तो न भवति, गुणज्ञाने च प्रवर्तन्ते जना इति लोकसिद्धमिदम्। अत एवोक्तं वृद्धैः—'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति।



## तृतीयः परिच्छेदः

अथ साधनाध्यायविवेचनं प्रारभ्यते। विवेचनं नाम मूलकारीय-तात्पर्यबोधानुकूलव्यापारः। तस्य प्रयोजनञ्चाज्ञानविपरीतज्ञाननिवर्तनम्। अत एव श्रीरामरुद्रभट्टाचार्यैरुक्तं मुक्तावल्या व्याख्याने 'अप्रतिपत्तेरतिप्रतिपत्तेर्वा व्याख्यानं कुर्वन्ति सन्तः' इति।

अत्रेदं बोध्यम्—यद्यपि शिवाद्वैतदर्पणे प्रसादगुणविशिष्टैः स्पष्टैर्वाक्यैः शक्तिविशिष्टाद्वैतमतानुसारेण सारेण सर्वमुपपादितम्। तत्र व्याख्याया आवश्यकता नास्ति, व्याख्याहेतुभूतयोरबोधविपरीतबोधयोरभावात्। तथापि यथा श्रुतिवाक्येषु स्पष्टतया भाषाक्लेशपदपदार्थदुर्गमरहितेषु सत्सु अपि 'आकाशादेवेमानि भूतानि जायन्ते' इत्यादिवाक्येषु जायमानसन्देहस्य 'इदमाकाशपदं भूतार्थरूपशब्दासाधारणधर्मकं द्रव्यं बोधयति, उत परमात्मबोधकम्' इत्याद्याकारकस्य निवृत्तये 'आकाशस्तल्लिङ्गात्' इत्यादिसूत्रैर्ब्रह्मसूत्रस्थैः सन्देहनिवृत्तिः क्रियते, तथैव शिवाद्वैतदर्पणकारैः प्रयुक्तेषु वाक्येषु वाक्यार्थेषु वा सन्देहो यदि जायते, सिद्धान्तस्य बृहत्त्वात्पारिभाषिकपद-पदार्थगर्भितत्वात्तर्हि तत्र सन्देहस्योत्थिताकाङ्क्षारूपस्य सम्भवादेका भगवती व्याख्यैव शरणम्, पूर्वोक्तदृष्टान्तसजातीयत्वात्। श्रुत्यर्थसन्देहनिवर्तकब्रह्मसूत्रतद्भाष्यतट्टीकोपटीका-टिप्पणीवदिति शम्। यथा च मया सामान्यतया सम्पूर्णस्यैव शिवाद्वैतदर्पणस्य यथार्थनामधेयस्य स्पष्टाभिधायित्वं व्याख्यानानपेक्षत्वरूपमुक्तम्, तथैव तृतीयपरिच्छेदेऽपि विद्यते सामान्याविरोधित्वाद् विशेषस्य। तथापि द्वित्राः पदार्थाः सन्ति विमर्शनीयाः।

### १. सम्भवत्सन्देहकपदार्थविमर्शः

तृतीयपरिच्छेदे शिवाद्वैतदर्पणे सन्ति किल केचन पदार्था विमर्शनीयाः। ते च इमे—

(१) स्थूलचिदचिद्विशिष्टत्वं कथम्? यतो हि स्थौल्यं गुणः, स च सावयव-पदार्थधर्मः। यथा स्थूलोऽयं देवदत्त इत्यादि। तच्च चिति बाधितम्। प्रमाणान्तरैरबाधिता एव शाब्दबोधकारणभूता योग्यता। चैतन्ये च स्थौल्यं बाधितम्। इत्येकः प्रश्नः।

(२) द्वितीयस्तु — अद्वितीयब्रह्मविषयः। तत्र श्रुतिवचनैः शिवाद्वैतदर्पणकृद्भिस्तत्र भवद्भिः शिवानुभवशिवाचार्यैर्जीवब्रह्मणोरैक्यं प्रतिपादितम्। आपाततो वेदे जीवब्रह्मणोर्भेदबोधकानि वाक्यानि बहूनि, अनेकानि च तयोरभेदबोधकानि दृश्यन्ते। तेषामविरोधमुद्दिश्याभेद एव तात्पर्यं व्यवस्थापितम्। अत एव खण्डनखण्डखाद्ये 'भेदाभेदेनाप्यशक्यसमर्थानि तानि' इति प्रोक्तम्, तत्र मूलञ्च—'तदनन्यत्वमारम्भण-शब्दादिभ्यः' इति सूत्रमुपदर्शितम्।

(३) तृतीयस्तु प्रश्नस्तत्रैव। शक्तिविशिष्टाद्वैताचार्यैः शाङ्करैश्च लोकविरुद्धं बहुदार्शनिकविरुद्धं बाधितमपि जीवब्रह्मणोरैक्यमनुभवविरुद्धं विरुद्धश्रुतिवाक्यसमन्वयाय व्यवस्थापितम्। तत्र भेदाभावे जीवब्रह्मणोरिति द्वन्द्वसमासो न स्यात्, पदार्थभेदे पदार्थतावच्छेदकभेदे वा द्वन्द्वसमासस्य साधुत्वात् ।

अपरञ्च जीवब्रह्मणोर्भेदं वदन्तो मनीषिणो नैयायिकप्रभृतयो नूनं निरुपाधिकभेदं वदन्ति। ग्रन्थकारास्तु घटाकाशमहाकाशयोरिवौपाधिकं भेदं निरुपाधिकाभेदञ्च वदन्ति। तत्र विषयैक्याभावात्कथं कलहः। औपाधिकभेदः खलु उपाधौ विद्यमाने भवति। यथा घटपटयोर्भेदः। औपाधिकस्तु भेद उपाधिसद्भावाद्भवति।

इत्थञ्च तयोर्द्वयोर्मतयोर्विभिन्नविषयकत्वेन बलाबलव्यवस्था कथं कृतेति विमर्शनीयो विषयः।

## समाधानदलानि

(१) प्रथमं तावत्प्रथमप्रश्नस्योत्तरं देयम्। दीयते च साम्प्रतं क्रमशस्त्रयाणामपि प्रश्नानामुत्तरम्। अनवयवस्यारूपस्याप्याकाशस्य यथा प्रतिबिम्बो भवति, इत्थमेव रूपवत्त्वेन च दृढा प्रतीतिः—नीलं नभ इत्यादि। शाङ्करमते त्रयो वादाः प्रसिद्धाः—प्रतिबिम्बवादः, आभासवादः, परिच्छेदवादश्च। तत्रापि प्रश्न इमे समुत्थिताः समाधीयन्ते तथैवात्रापि—ययोरेव समो दोषः परिहारस्तयोस्तथेति न्यायेन क्रियते। यतो हि स्वयमेव भगवान् वासुदेवः प्राह गीतायां 'ममैवांशो जीवलोकः सर्वभूतेषु भारत' इति। यथा न्यायमते उत्पत्तिविनाशरहितं व्यापकमाकाशम्, तथा तेषामपि वैदिकत्वात् 'तस्माद्वा एतस्मादाकाशः सम्भूतः' इत्यादिश्रुतिसमन्वयाय शब्दस्योत्पत्त्या शब्दाश्रयस्याकाशस्यापि गौणीमुत्पत्तिं स्वीकृत्य श्रुत्यर्थोऽविरुद्धप्रमाणकत्वादङ्गीकृतः, तथैव प्रकृतेऽपि कारणीभूतवस्तुनिष्ठस्थौल्यमादाय—'यस्य पृथिवी शरीरं यस्यात्मा शरीरम्' इत्यादिश्रुतिप्रमितापृथग्भूततादात्म्यसम्बन्धवत्त्वेन चिद्रूपमजीवमात्राचिद्भूत-

समस्तप्रपञ्चकारणीभूतं समस्ताहेयगुणगणमण्डितस्वप्रकाशचिद्रूपपरमात्मविशिष्टं जगदिदं चकास्तीति शक्तिविशिष्टाद्वैतसम्मतप्रमितपथप्रदर्शनपरकवीरशैवमतं विराजतेतमाम्।

(२) द्वितीयप्रश्नस्योत्तरन्तु दत्तप्रायम्। उपाधिमात्रप्रविभज्यमानपरममानश्रुतिवाक्य-कदम्बसिद्धमनुपहितजीवजाताभेदः परमात्मना सहेति न कोऽपि विरोधः। अत एवाशेषविद्याकान्तारसञ्चरणशीलपरमशीलवत्परमशैवाग्रकुशाग्रमितमतिमन् निरस्तसमस्तविपक्षपक्षविदलनदक्षजीवन्मुक्तविदेहमुक्तकृतपरशिवसाक्षात्कार-प्रयोज्याशेषानर्थव्रातमूलाविद्याविध्वस्तपरमानन्दस्फुरणमत्पुरुषधौरेयश्रीश्रीहर्षमिश्रैः खण्डनखण्डखाद्येऽगादि—'सद्वचनाभासलक्षणघातकप्रमाणमनुपन्यस्य शतशस्त्वय्युच्य-मानेऽपि नास्माकमादरः।' (ख०ख०खा०प्र०प०) अतः प्रत्यक्षप्रमाणसिद्धपरमप्रसिद्धजीव-परमात्मभेदावगाहिप्रत्यक्षप्रमाणं स्खलद्बलं विशालचन्द्रमण्डलनिष्ठवितस्तिपरिमितत्वप्रकारकं प्रबाधितं समस्तदोषरहितप्रमाणप्रवराबाधितानधिगतविषयकत्वेन व्यधिकरणप्रकारावच्छिन्न-विषयताशून्यत्वेन च विषयशूराणि हि ज्ञानानीति प्रतिष्ठापराकाष्ठामुपस्पृशद्भिर्वेदैर्बाधितैः प्रत्यक्षैर्वेदवाक्यानि नहि कदापि बाधयितुं शक्यानीति न दोषगन्धोऽपि जीवपरमात्मवादे। अपरञ्च—उपहितजीवपरमात्मभेदावगाहित्वेन प्रत्यक्षस्य प्रामाण्ये व्यवस्थिते उपाधिसत्ताव्याप्यसत्ताकत्वेन निरवच्छिन्नप्रामाण्यजुषां लब्धावसराणां श्रुतिवाक्यानां बाधकत्वं शोभते पण्डितानां मुखारविन्दान्न कोऽपि एकोऽपि विद्वान् वक्ति पारमार्थिकाभेदे जीवब्रह्मणोर्बाधितमित्यहो निष्कण्टकोऽयं पन्थाः परमपुरुषार्थपरमानन्दावाप्ति-लक्षणविलक्षणमोक्षस्य। अत एवोक्तं शब्दतत्त्वविद्भिस्तत्रभवद्भिः श्रीश्रीहर्षमिश्रैः खण्डने—

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
बाधनादुपजीव्येन न बिभेति कदाचन ।। इति।

(ख०ख०खा०प्र०प०)

तदनन्तरं प्रथमपूर्वपक्षरूपप्रश्नमुत्थाप्य समाहितं खण्डने 'न च संस्कारारूढदृढावयवः प्रतिपत्त्युत्पत्तिप्रतिबन्धशक्यशङ्क्यः, समाहितत्वात्' इत्यादिग्रन्थेन। श्रुतेः प्रत्यक्षस्य च भिन्नविषयकत्वेन दोषवत्त्वेन दोषशून्यत्वेन च श्रुतेः प्राबल्यं प्रत्यक्षस्य च दौर्बल्यम्।

तृतीयस्तु प्रश्नः प्रदर्शितसामान्यप्रमाणप्रमिताभेदद्वारा प्रसिद्धभेदविषयकप्रत्यक्षस्य बलाबलव्यवस्थया समाहितः।

अत: समस्तवेदवाक्यप्रमाणप्रमितपशुपतिपरमशिवप्रतियोगिकभेदत्वावच्छिन्नप्रतियोगिताकाभाववज्जीवजातमिति मतं वीरशैवमतस्य शक्तिविशिष्टाद्वैतापरसंज्ञकस्येति नात्र दोषबिन्दुलेशोऽपि। अनुमानञ्च—जीव: परमशिवप्रतियोगिक पारमार्थिकानौपाधिकभेदशून्य:, वेदप्रमितत्वात्, नीलो घट इत्यादिलोकवाक्यदृष्टान्तेन मानम्। तथा चात्र दोषाभावादप्रमामूलभूतदोषमात्रशून्यवेदप्रमितपरमात्मजीवाभेदविषयकज्ञानजननपरकशक्तिविशिष्टाद्वैतमतं परमं प्रमाणमिति निर्दोष: पन्था:। एवञ्च उपाधिबाधप्रतिपक्षशून्यं मतमिदमादरणीयमाचरणीयञ्च विद्वद्भिरिति निवेदयन् विरमति वीरशैवमतपोषकोऽयं लेखक:। अत एवोक्तं शिष्टै: 'बुद्धे: फलमनाग्रह:' इति।

'यत्प्रशस्यते तद्विधीयते यन्निन्द्यते तन्निषिध्यते', 'पूजितविचार: मीमांसा',

धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिवर्तव्यतामात्रं मीमांसा प्रविधारयेत्।।

इति प्रमाणप्रकारैरभेदस्य स्तुत्या भेदस्य च निन्दाश्रवणात् परमात्मजीवयो: पारमार्थिकाभेद एवेति मान्यमान्य: सिद्धान्त:। किं बहुना, यदा समस्तस्य प्रपञ्चस्य प्रत्यक्षपरोक्षप्रमाणप्रकरप्रतिलब्धस्याभेदं निर्दिशन्ती श्रुति: 'सर्वं खल्विदं ब्रह्मेति' न भेदावगाहिदुर्बलप्रमाणात् प्रत्यक्षाद् बिभेति, तदा चेतनस्य जीवस्याभेदप्रतिपादने कथङ्कारं बिभीयादपि, का सा श्रुतिरिति चेच्छ्रूयतां यदि कुतूहलम्—'तत्त्वमसि श्वेतकेतो', 'अहं ब्रह्मास्मि', 'अयमात्मा ब्रह्म', 'प्रज्ञानं ब्रह्म' इति महावाक्यै: कृतार्थजनकज्ञानजनकै: 'दर्भमन्तरं वेद मृत्यो: स मृत्युमाप्नोति' इत्यादिभेदनिन्दया च जीवपरमात्मनोरभेदोऽबाधित: प्रसिद्ध्यति। ब्रह्मसूत्रे च 'आत्मेत्युपगच्छन्ति ग्राहयन्ति च', 'उपमर्दञ्च', 'तदनन्यत्वमारम्भणशब्दादिभ्य:' इति, गीतायाञ्च 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत',

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मन:।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।। इति।

अत: सकलवेदपुराणेतिहासप्रमाणसिद्धं परमपुरुषार्थभूतमोक्षप्रयोजकं स्फुरद्द्वैतविभ्रान्तिसन्तानसन्तप्तवृन्दारकोपजननमात्रनिवर्तकं विरक्तिप्रयोजकं परमशिवसायुज्यसाधकसकलानर्थव्रातबाधकाज्ञाननिवर्तकतावच्छेदकविजातीयज्ञानजनकं ज्ञानं तत्त्वज्ञानापरपर्यायमविद्यास्मिताजन्ममरणलक्षणसंसारनिवर्तकं परमात्मजीवाभेदविषयकं जायत इति मतोद्घोषकं किल वीरशैवदर्शनं दर्शनीयतमम्।

न च 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति कठोपनिषद्वाक्येनाभेदस्य प्रमितत्वे तत्त्वे कथमभिनिवेश इति वाच्यम्, तद्वाक्यस्यान्याभिप्रायकत्वेनादोषात्। तथा हि— अनन्यप्रोक्ते जीवपरमात्मनोरभेदे प्रमिते जीवस्य गतिर्लोकान्तरगमनं नास्ति न भवति। अस्-भू-धात्वोरेकार्थकत्वेनैतादृशार्थलाभात्। तथा चोक्तम्—'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इति। प्राह च गीतायामपि भगवान् मुकुन्दो वासुदेवः परमात्मा प्रियमर्जुनं लक्ष्यीकृत्य तदुपलक्षितसर्वजीवान् लक्ष्यीकृत्य 'अनन्याश्चिन्तयन्तो माम्' इत्यादि।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।

साक्षाद्भगवन्मुखकमलनिस्सृतया गीतया गीतोऽयं श्लोको मोक्षनिर्देशकः। तथा चापरोऽपि—"आग्रहपूर्विका निष्ठा रतिः, तस्यानुभवस्तुष्टिः, तस्य पराकाष्ठा सन्तोषः" इति। योगसूत्रेऽपि प्रोक्तमिदमेव तत्त्वम्—'सन्तोषादनुत्तमसुख- लाभः' इति। व्यावहारिकोऽपि कोऽपि सन्तोषोऽलंपर्यायो निर्वाहादभ्यधिकस्यानुपादित्सारूपः।

अतोऽत्रेदमाकूतम्—आग्रहशून्यचेतोभिर्मनीषिभिर्निर्दुष्टं मतमिदमारम्भणीयं वरणीयञ्च।



# चतुर्थः परिच्छेदः

फलाध्यायस्य चतुर्थस्य प्रतिपाद्यं किल फलतावच्छेदकमोक्षत्वप्रयोजकं तत्त्वमस्यादिवाक्यजन्यं भेदव्यापकसंसर्गशून्यशुद्धचैतन्याभिन्नज्ञानम्। 'न लोकाद्भिद्यते शास्त्रम्' ये हि लौकिकाः शब्दा यदर्थकाश्च त एव वैदिकाः। दधिशब्दस्य यथा दुग्धविकारभूतपिच्छिलवस्तुविशेषोऽर्थो लोके दध्ना भुङ्क्ते, तथैव दध्ना जुहोतीत्यादावपि स एवार्थः। न च कदाचिदपि ततो भिन्न इति पूर्वमीमांसामर्यादा। अत एवोक्तम्—

एकात्मवत्वाज्जहती न सम्भवेत्
तथाज्जहल्लक्षणता विरोधतः ।
सोऽयं पदार्थाविव भागलक्षणा
युज्येत तत्त्वं पदयोरदोषतः ।। इति।

लक्षणावृत्त्या च महावाक्येषु शुद्धे लक्षणा। गीतायां यदुक्तं मोक्षप्रयोजकं ज्ञानं तत् कीदृशमिति जिज्ञासायां तत्रैव तत्स्वरूपमुपदर्शितमखण्डार्थरूपम् —

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।। इति।

अत्र च सर्वस्य जगतः परमात्मरूपत्वं यत्रोक्तं तत्र सर्वान्तर्गतत्वाज्जीवस्यापि परमशिवरूपत्वमागतमेव। तत्रायं विशेषः — ब्रह्मणो जडरूपत्वमसम्भवि, 'सूर्यकोटि-समप्रभः' इत्युक्तेः। अतः कृत्वाचिन्तान्यायेन यावदनुपपन्नं तावत्सर्वं ज्ञाप्यमिति न्यायात् 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र मननस्य तर्करूपत्वात्तर्कस्य च समाधिरूपत्वात् समाधेश्चासम्प्रज्ञातसम्प्रज्ञातरूपत्वेन चित्तवृत्तिनिरोधात्मकस्य निर्विषयत्वलक्षणविलक्षणलोकोत्तरचमत्कारकारिविगलितवेद्यान्तःसंस्पर्शशून्यभेदा-भावादखण्डार्थबोधो जायत इति सूक्ष्मेक्षिकया निर्णीतः सिद्धान्तः।

तत्र को नामाखण्डार्थबोध इति चिन्त्यते। तत्रापर्यायशब्दानां सम्बन्धशून्य-बोधजनकत्वमखण्डार्थत्वम्। तथा चोक्तम् —

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।। इति।

अपर्यायशब्दानां संसर्गशून्यबोधजनकत्वमखण्डार्थत्वम्। यद्वा—प्रातिपदिकार्थमात्रविषयकत्वम्। तथा चाह भगवान् पाणिनिरपि—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति। प्रातिपदिकनिष्ठ-व्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वम्। यस्मिन् प्रातिपदिके समुच्चरिते नियमेनावश्यं यो हि भास्यतेऽर्थः स प्रातिपदिकार्थः। व्यक्तिमात्रमित्यर्थः। मात्रपदेन सम्बन्धस्य व्यवच्छेदः। सम्बन्धः किल द्वयोः पदार्थयोर्भवति। नह्येकस्मिन् सम्बन्धसम्भवः। स्वं न स्वीयमिति सिद्धान्तात्। तथा चोक्तम्—'नह्यत्यन्तनिपुणोऽपि नटः स्वस्कन्धमारोढुं शक्नोति' इति। तथा चोक्तमद्वैतसिद्धौ मुनिना मधुसूदनेन द्वितीयप्रकरणादौ—'पदवृत्तिस्मारितातिरिक्तसंसर्गशून्यबोधजनकत्वमखण्डार्थत्वम्' इति। विशेषस्तु शास्त्रार्थोऽतिसूक्ष्मस्तत्रैव द्रष्टव्यः। अत्र विस्तरप्रसङ्गात्।

इत्थञ्चाविनाभावसम्बधरूपया अभिधेयसम्बन्धरूपया ज्ञाप्यसम्बन्धात्मिकया वा लक्षणया मूलाविद्यानिवर्तकज्ञानजनकत्वं तत्त्वमस्यादिवाक्यानामिति वेदान्तसरणिस्तरणिर्ज्ञानवारिधेः। तत्र च यथा राघवेन्द्रं मर्यादापुरुषमुद्दिश्य सर्वजनांश्च लक्ष्यीकृत्य गुरोर्वशिनो वसिष्ठस्योपदेशः—

दृष्टान्तेन विना राम ! नापूर्वार्थोऽवबुध्यते ।
दीपं विना यथा रात्रौ भाण्डोपस्करणं गृहे ।।

इति न्यायेन महावाक्यैः सोऽयं देवदत्त इत्यादिलौकिकसंशयजिज्ञासानिवर्तकज्ञानजनकत्वं वेदान्तभागे वेदस्य तत्त्वमस्यादिवाक्यानामात्मविषयकसंशयजिज्ञासानिवर्तकमोक्षप्रयोजकज्ञानजनकत्वमिति वेदितव्यं भवति।

तत्र च याभ्यां रूपाभ्यां विशिष्टयोर्ययोः सम्बन्धग्रहस्तेनैव रूपेण तयोर्द्वयोरेकावगमेऽपरस्य बोधः स्मरणं जायत इति दृष्टचरं लोके। यथा हस्तिहस्तिपकयोर्द्वयोः शास्यशासकभावेन सम्बन्धो गृहीतो यदा, तदा तयोर्द्वयोर्मध्ये कस्याप्येकस्य हस्तिनो हस्तिपकस्य वा दर्शने ततोऽन्यस्यापि सम्बन्धिनो बोधो जायते किल स्मरणात्मकः। एकसम्बन्धिज्ञानेऽपरस्य ध्रौव्यादिति न्यायात्। इत्थञ्च सामानाधिकरण्यविशेषणविशेष्यभावलक्ष्यलक्षणसम्बन्धाच्च महावाक्यैर्जायते खल्वखण्डार्थबोधः। तथा चोक्तम् —

सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणभावो वा पदार्थप्रत्यगात्मनाम् ।। इति।

पदयोः सामानाधिकरण्यं पदार्थयोः विशेषणविशेष्यभावः प्रत्यगात्मनोश्च लक्ष्यलक्षणभावः। एभिरुपायैर्महावाक्यैरखण्डार्थबोधो जायते।

तत्र चायं निर्गलितोऽर्थः—एभिस्त्रिभिरुपायैरुपेयस्याखण्डार्थबोधस्योपलब्धिर्भवतीत्यहो शब्दसामर्थ्यमहत्त्वम्।

## अखण्डार्थेऽनुमानं मानम्

एवञ्च—'आदौ पदार्थावगतिर्हि कारणम्' इत्युक्तेः शक्यार्थबोधस्य बाधितत्वाच्छक्यसम्बन्धरूपया लक्षणया जायते किलाखण्डार्थबोध इति वस्तुस्थितिः। 'अनेन पुरुषधौरेयस्यापि सिद्धिः' इत्यनुमानप्रकरणे चिन्तामणौ भणितम् (आचार्यगङ्गेशोपाध्यायरचितोऽयं ग्रन्थः)। तत्र शिवाद्वैतदर्पणे चतुर्थे परिच्छेदेऽनुमानं मानमुपदर्शितं ग्रन्थकृता तत्रभवता भवता शिवानुभवशिवाचार्येण मुनिना—'तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठम्, अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इति वाक्यवत्' इति। तदेवं पदयोरखण्डार्थनिष्ठत्वेन सामानाधिकरण्यं वाच्यार्थांशे विरोधाद् विना लक्षणां न सङ्गच्छते। तथा चोक्तम्—'तत्त्वंपदार्थे लिङ्गरूपान्योऽन्यविरुद्धमुपाधिकृतवाच्यार्थं त्यक्त्वा सच्चित्सुखात्मकं लक्ष्यार्थमविरुद्धं यच्छिवं तदिति या मतिः सा सम्बन्ध इति प्रोक्ता वेदान्तागमवेदिभिः' इति। अनेन ग्रन्थसन्दर्भेणाखण्डार्थबोधः समुपपादितः। तत्रानुमानप्रमाणे प्रतिज्ञाहेतूदाहरणोपनयनिगमनानुकूलपञ्चावयवात्मकं प्रयोगं कृत्वा साध्यं साधयन्ति तर्ककुशलाः। तत्र च सम्भवति लघौ गुरौ तदन्यायत्वाद् हेतुतावच्छेदकं साध्यतावच्छेदकञ्च लघुरूपमेव प्रयुज्यते। ज्ञानकृतशरीरकृतगौरवं घोररौरवनिभं विहायाविहाय चावश्यकं विशेषणमनुमानं भवति मानमिति मानविदः।

अतः साध्यविमर्शनीयत्वाभावात्स्वयमेव लघुरूपत्वाद् हेत्वंशे महति गुरौ फलचिन्ता विधीयते। तथा हि—

यदि समानाधिकरणत्वादित्येव हेतुस्वरूपं स्यात्तदा घटो घट इत्यत्रातिव्याप्तिर्व्यभिचाररूपा। अतोऽत्राकार्यकारणद्रव्यमात्रनिष्ठत्वमाह। यदि तावानेवांशः प्रविष्टः स्यात्तदा नीलो घट इत्यादौ स्यात् किल व्यभिचारः। अतो हेतोर्हेतौ समानाधिकरणत्वनिवेशः। यद्यपि समानाधिकृतत्वं घटो घट इत्यत्रापि वर्तते, किन्तु

सामानाधिकरण्यं नाम अभेदसम्बन्धावच्छिन्नशाब्दबोधयोग्यताकत्वमभिप्रेतम्। तच्च नास्ति घटो घट इत्यत्र, तत्राभेदबोधं प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकयोर्भेदस्याश्यकत्वात्, घटो घट इत्यत्र तु तयोर्द्वयोरेकत्वाच्छाब्दबोधसामग्रीविरहात्। तथा चोक्तं गदाधरभट्टाचार्यैर्व्युत्पत्तिवादे—

'तद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मयोर्भेदः कारणम्।' इति। तस्य च कारणस्यात्राभावाद् भावाच्चैकधर्मस्य न योग्यतेति हेतुदलविमर्शः।

अखण्डार्थविषयकोऽपरः शास्त्रार्थस्तु द्रष्टव्योऽद्वैतसिद्धेर्द्वितीये परिच्छेदे। लघुचन्द्रिकाख्यायां व्याख्यायां किमिति चेत्संक्षेपेणोल्लिखामि। तत्र सह संयोगेऽतिव्याप्तिवारणाय पदवृत्तिस्मारितार्थविषयकत्वं बोधे विशेषणं प्रदत्तम्। अन्यथाऽपर्यायशब्दानां संसर्गाविषयकबोधजनकत्वमखण्डार्थत्वमित्येव स्यात्तर्हि स्यादव्याप्तिः, कुत इति चेत्तर्हि श्रूयतां सारसर्वस्वं यदि कुतूहलम्—'अप्राप्तयोस्तु या प्राप्तिः स संयोग ईरितः' इत्युक्तेः संयोगशब्दवाच्यस्य गुणत्वव्याप्यस्याव्याप्यवृत्तेः पदार्थस्योत्पत्तिः स्मरणे भवति। तत्र संयोगः स्वयं संसर्गः सम्बन्धः। अतस्तल्लक्षणं सम्बन्धविषयकबोधजनकत्वमेव, संयोगरूपप्रातिपदिकवाच्यत्वात्। अतस्तत्र प्रसक्ताव्याप्तिवारणाय पदवृत्तिस्मारितातिरिक्तत्वं विशेषणं प्रदत्तम्। दत्ते च तस्मिन् विशेषणे संयोगव्यावृत्तिः, तस्य संयोगपदवाच्यत्वेन वृत्त्या पदेन स्मारितत्वात्। प्रातिपदिकत्वञ्च व्यापारसन्तानरूपक्रियानिष्ठवाच्यतानिरूपितपाणिनीयसङ्केतसम्बन्धेन भ्वादिगणपठितशब्दवृत्तिभ्वादिगणपठितशब्दानुवृत्तिसदृशानुपूर्वीविशिष्टधातुपदजन्यप्रतिप्रतीतिविषयतावच्छेदकावच्छिन्नभिन्नत्वे सति पाणिनिमहर्षिविरचिताष्टाध्यायीस्थद्वितीयतृतीयाध्यायगोचरप्रकृत्यर्थान्वितबोधजनकत्वविशिष्टप्रत्ययत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नत्वे सति तादृशविशेषणविशिष्टप्रकृतिनिष्ठोद्देश्यतानिरूपितविधेयतावच्छेदकावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिभूतशब्दत्वम्। तज्जन्यज्ञानविषयत्वमखण्डार्थत्वमिति वा लाघवात् स्वीक्रियते। तथा चोक्तं श्रीमद्भिस्तत्रभवद्भिर्दर्शनकाननकेशरिभिर्वाचस्पतिमिश्रैः—'कल्पनालाघवं यत्र तं पक्षं रोचयामहे' इति न्यायबिन्दुनामके ग्रन्थे।

यावन्ति हि लक्षणवाक्यानि भवन्ति, तानि सर्वाणि भवन्त्यखण्डार्थविषयकबोधजनकानि। संयोगलक्षणं वा गन्धवत्त्वं पृथिव्या लक्षणं वा भवेत्, किन्तु तत्रापि सूक्ष्मदृष्ट्या विमृष्टे सति तत्र गुणगुणिनोः समवायसम्बन्धसत्त्वात् पदार्थद्वयस्य विद्यमानत्वेन संसर्गविषयकत्वेन संसर्गाविषयत्वघटिताखण्डार्थप्रसक्तेरव्याप्तिस्तदवस्थैव स्यादिति हेतोः

स्वरूपलक्षणान्येव केवलमखण्डानीति वेदान्तसिद्धान्तः। अत एव लघुचन्द्रिकायां नीलो घट इत्यादिवाक्यानामखण्डार्थविषयकबोधजनकत्वं नादृतम्, तत्र नीलस्य गुणत्वाद् गुणगुणिनः समवायात् संसर्गविषयकबोधजनकत्वाभावेनाव्याप्तेर्वज्रलेपायितत्वात्।

तत्र च सामान्यस्यानुपन्यासे तद्व्याप्यस्योल्लेखे शास्त्रीयनिषेधसत्त्वेन स्वरूपलक्षणतटस्थलक्षणयोर्लक्षणोल्लेखात् प्रागेव सामान्यस्य लक्षणस्य लक्षणमुच्यते स्पष्टतया प्रतीतये। तथा हि तत्र स्वरूपलक्षणं नाम, नाम इति वाक्यालङ्कारे, स्वरूपमेव लक्षणं स्वरूपलक्षणम्, इतराघटितमिति यावत्। यावल्लक्ष्यकालानवस्थितत्वे सति व्यावर्तकत्वं तटस्थलक्षणत्वमिति। तद्व्यापकस्य लक्षणस्य सामान्यलक्षणन्तु-असाधारणधर्मो लक्षणम्। धर्मेऽसाधारणयञ्च लक्ष्यतावच्छेदकसमनियतत्वम्। समनियतत्वञ्च व्याप्यत्वे सति व्यापकत्वम्। व्यापकत्वन्तु व्यापकाभावाधिकरणतानिरूपिताधेयता-रहितत्वम्। व्यापकत्वञ्च व्याप्याधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकधर्मरहितत्वम्। द्वयोर्निवेशः किमर्थमिति चेत्तर्हि द्रष्टव्योऽयं विषयो नीलकण्ठीग्रन्थे विस्तरभयान्नेह प्रतन्यते।

तत्र ब्रह्मणो भवति तटस्थलक्षणं 'यतो वा इमानि भूतानि जायन्ते' इत्यादि-श्रुतिनिर्दिष्टजगज्जन्मादिकारणत्वम्। जगत्तु लक्ष्यभूतब्रह्मावस्थितिकालपर्यन्तं न तिष्ठति, महाप्रलयेऽभावात्। स्वरूपलक्षणोदाहरणन्तु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिकम्।

न च धर्मधर्मिणोः सम्बन्धाभावेऽसाधारणधर्मत्वं लक्षणनिमित्तं न भवति, स्वस्मिन् स्ववृत्तिताया अभावस्य प्रागेव सोदाहरणमुपन्यासात्। नह्यत्यन्तनिपुणोऽपि नटः स्वस्कन्धमारोढुं शक्नोति। अतो यावन्ति स्वरूपलक्षणानि, तानि सर्वाण्यपि संसर्गाविषयकत्वेन बोधजनकानि भवन्ति। अतस्तेषामेवाखण्डार्थत्वमिति निष्पक्षपातः पन्थाः। स्नेहेन पठन्तु मननञ्च कुर्वन्तु ततोऽयं विचारो भवेद् अभिव्यक्तमहत्त्वकः। अत एव चित्सुखाचार्यैरुक्तम् 'यद्वा तत्प्रातिपदिकार्थता' इति शम्।

यतिना ब्रह्ममतिना चन्द्रशेखरस्वामिना ।<br>
प्रेरितोऽयं प्रवृत्तोऽत्र प्रसीदतु शिवः प्रभुः ।।

माघे पूर्णातिथौ दिल्ल्यां प्राप्तावकाशो हि रात्रिकाम् ।<br>
लब्ध्वा निर्मक्षिकं कालं सम्पूर्णां कृतवानिमाम् ।।

*ॐ शान्तिः शान्तिः शान्तिः।*



## हमारे अन्य प्रकाशित ग्रन्थ

१. **लिङ्गधारणचन्द्रिका** (हिन्दी भावानुवाद सहित) *संपा० पं० व्रजवल्लभ द्विवेदी*
२. **सिद्धान्तशिखामणिः** तत्त्वप्रदीपिकाख्यसंस्कृतव्याख्यासहितः (मराठी भावानुवाद-सहितश्च) *संपा० ज० डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*
३. **ब्रह्मसूत्रश्रीकण्ठभाष्यम्** (चतुःसूत्री) अप्पय्यदीक्षितकृतशिवार्कमणिदीपिका (संस्कृत-टीकासहितम्) *संपा० पं० व्रजवल्लभ द्विवेदी*
४. **वीरशैव अष्टावरण विज्ञान** (हिन्दी और मराठी) *डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*
५. **सिद्धान्तशिखामणिसमीक्षा** *डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*
६. **निगमागम संस्कृति** (हिन्दी) *संपा० पं० व्रजवल्लभ द्विवेदी*
७. **सूक्ष्मागमः** (हिन्दी भावानुवादसहितः) *संपा० पं० व्रजवल्लभ द्विवेदी*
८. **चन्द्रज्ञानागमः** (हिन्दी भावानुवादसहितः) *संपा० पं० व्रजवल्लभ द्विवेदी*
९. **मकुटागमः** (हिन्दी भावानुवादसहितः) *संपा० प्रो० रामचन्द्र पाण्डेय*
१०. **कारणागमः** (हिन्दी भावानुवादसहितः) *संपा० पं० व्रजवल्लभ द्विवेदी*
११. **निगमागमीयं संस्कृतिदर्शनम्** (संस्कृत) *संपा० पं० व्रजवल्लभ द्विवेदी*
१२. **पारमेश्वरागमः** (हिन्दी भावानुवादसहितः) *संपा० पं० व्रजवल्लभ द्विवेदी*
१३. **ईशावास्योपनिषद्** (वीरशैवभाष्यसहितः) *संपा० पं० जगन्नाथ शास्त्री तैलंग*
१४. **केनोपनिषद्** (वीरशैवभाष्यसहितः) *संपा० पं० जगन्नाथ शास्त्री तैलंग*
१५. **सिद्धान्तप्रकाशिका** (हिन्दी भावानुवादसहितः) *संपा० पं० व्रजवल्लभ द्विवेदी*
१६. **शक्तिविशिष्टाद्वैततत्त्वत्रयविमर्शः** *ज० डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी*
१७. **अनुभवसूत्रम्** *संपा० गजानन शास्त्री मुसलगाँवकर*
१८. **सिद्धान्तशिखोपनिषद्** (वीरशैवभाष्यसहितः) *संपा० पं० जगन्नाथ शास्त्री तैलंग*
१९. **ब्रह्मसूत्रशाङ्करीवृत्तिः** *संपा० डॉ० केदारनाथ त्रिपाठी*
२०. **सिद्धान्तसारावलिः** *संपा० पं० व्रजवल्लभ द्विवेदी*
२१. **श्रीगुरुगीता** *संपा० पं० व्रजवल्लभ द्विवेदी*
२२. **शिवाद्वैतदर्पणः** *शिवानुभव शिवाचार्य*
२३. **तन्त्रागमीय ज्ञानकोश** *ज० डॉ० चन्द्रशेखर शिवाचार्य महास्वामीजी इत्यादि*
२४. **सिद्धान्तशिखामणिमीमांसा** *संपा० पं० व्रजवल्लभ द्विवेदी*
२५. **Candrjñānāgama** (English Translation) *Dr. Rama Ghose*
२६. **Makuṭāgama** (English Translation) *Dr. Rama Ghose*
२७. **Pārameśvarāgama** (English Translation) *Dr. Rama Ghose*